शुक्लयजुर्वेदीया

# वाजसनेयसंहितोपनिषत्

वा

# ईशोपनिषत् ।

श्रीमद्बलदेवविद्याभूषणविरचितेन

ईशोपनिषद्भाष्येन तट्टीकया च सहिता

श्रीमच्छङ्कराचार्य्यविरचितेनभाष्येण

श्रीमदानन्दगिरिकृतया

तट्टीकया समलङ्कृता

वङ्गानुवाद-तत्तात्पर्य्यव्याख्यया इंलण्डीयभाषाव्याख्यानेनान्विता च

श्रीयुक्तश्यामलालगोस्वामिसिद्धान्तवाचस्पतिना संस्कृता

---

श्रीयुक्तअघोरनाथदत्तेनप्रकाशिता च

---






कलिकाताराजधान्याम् :

शिवनारायणदासस्य लेनस्थित २९-३० संख्यक भवने पिपल्‌स् यन्त्रे

श्रीराखालचन्द्रभट्टाचार्य्येणमुद्रिता ।

---

माघ—१३०१ ।

1895.

## शुक्लयजुर्व्वेदीयवाजसनेयसंहितोपनिषत् वा

# ईशोपनिषत्।

॥ओं॥ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ओं॥
॥ओं॥ शान्तिः शान्तिः शान्तिः ॥ओं॥

**ईशा वास्यमिदं सर्व्वं यत् किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १ ॥**

---

## विद्याभूषणभाष्यम्।

वेदास्तया स्तुतगिरो यमचिन्त्यशक्तिं सृष्टिस्थितिप्रलयकारणमामनन्ति।
तं श्यामसुन्दरमविक्रियमात्ममूर्त्तिं सर्व्वेश्वरं प्रणतिमात्रवशं भजामः॥

वेदेषु खलु कर्म्मणो निखिलपुमर्थहेतुत्वं विष्णोस्तु कर्म्माङ्गत्वं स्वर्गादेः कर्म्मफलस्य नित्यत्वं जीवस्य प्रकृतेश्च स्वतः कर्त्तृत्वं परिच्छिन्नस्य प्रतिविम्बितस्य भ्रान्तस्य वा ब्रह्मण एव जीवत्वं चिन्मात्रब्रह्मात्मकत्वधीमात्रादेवास्य जीवस्य संसृतिविनिवृत्तिरित्यापाततोऽर्थो दुर्म्मतिभिः प्रतीयन्ते। तानिमान् पूर्व्वपक्षान् विधाय परस्य विष्णोरिह स्वातन्त्र्यसर्व्वकर्त्तृत्वसार्व्वज्ञ्यपुमर्थत्वादिधर्म्मकत्वज्ञानसुखस्वरूपत्वं निरूप्यते। तथाहि ईश्वरजीवप्रकृतिकालकर्म्माख्यानि पञ्च तत्त्वानि श्रूयन्ते। तेषु विभुचैतन्यमीश्वरोऽणुचैतन्यन्तु जीवः। नित्यज्ञानादिगुणकत्वमस्मदर्थत्वञ्चोभयत्र। ज्ञानस्यापि ज्ञातृत्वं प्रकाशस्य रवेः प्रकाशकत्ववदविरुद्धम्। तत्रेश्वरः स्वरूपशक्तिमान् प्रकृत्याद्यनुप्रवेशनियमनाभ्यां जगद्विदधत् चेतन-

भोगापवर्गौ वितनोति । एकोऽपि वस्तुभावेनाभिन्नोऽपि गुणगुणिभावेन देहदेहिभावेन नि तृप्रतीतिविषयोऽव्यक्तोऽपि भक्तिव्यङ्ग्य एकरसः प्रयच्छति चित्सुखं स्वरूपम् । जीवास्त्वनेकावस्था बहवः । परेशवैमुख्यात् तेषां बन्धस्तत्साम्मुख्यात् तु तत्स्वरूपतद्-गुणावरणरूपद्विविधबन्धविनिवृत्तिस्तत्स्वरूपादिसाक्षात्कृतिः । प्रकृतिः सत्त्वादिगुण-साम्यावस्था तमोमायादिशब्दवाच्या तदीक्षणावाप्तसामर्थ्या विचित्रजगज्जननी । कालस्तु भूतभविष्यद्वर्त्तमानयुगपच्चिरक्षिप्रादिव्यवहारहेतुः क्षणादिपरार्द्धान्तश्चक्रवत्परिवर्त्तमानः प्रलयसर्गनिमित्तभूतो द्रव्यविशेषः । ईश्वरादयश्चत्वारोऽर्था नित्याः । जीवादयस्तु तद्वश्याश्च । कर्म्म तु जड़मदृष्टादिशब्दव्यपदेश्यमनादि विनाशि च भवति । चतुर्णामेषां ब्रह्मशक्तित्वादेकं शक्तिमद्ब्रह्मेत्यद्वैतवाक्येऽपि सङ्गतिरित्यादीनर्थान् निरूपयितुं स्वयमाचार्य्यस्वरूपा श्रुतिराह ईशेत्यादि । ईशा वास्यमित्यादीनां मन्त्राणामात्मयाथात्म्य-प्रकाशकत्वेन विरोधादेव कर्म्मस्वविनियोगः किन्तूपासनायामविरोधात् । उपासना तु जीवपरयोः सम्बन्धविशेषसाधनं भजनमेव । सम्बन्धो हि जीवे परसाम्मुख्यम् । अतः संक्षेपतो व्याख्यास्यामः । ईशा वास्येति । तिस्रोऽनुष्टुभः । दध्यङ्ङाथर्वण ऋषिः स्वं शिष्यं पुत्रञ्च निष्कामधर्म्मनिर्म्मलचित्तं सत्प्रसङ्गलुब्धं श्रद्धालुं शान्त्यादिमन्तमधि-कारिणमुपसन्नमाह ईशा वास्यमित्यादि । ईश ऐश्वर्ये क्विबन्तः ईष्टे इति ईट् । सर्व्वस्येशिता परमेश्वरः । स हि सर्व्वजन्तूनामात्मत्वात् सर्व्वमीष्टे । तेनात्मना ईशा परमेश्वरेणेदं सर्व्वं प्रत्यक्षप्रमाणसिद्धं विश्वं वास्यं वस आच्छादने ऋहलोर्ण्यदिति ण्यत्प्रत्ययः णित्वात् स्वरितः आच्छादनीयमित्यर्थः । सर्व्वं तेन व्याप्तमिति शेषः । स एवाधस्तात् स एवोपरिष्टात् । अन्तर्बहिश्च तत् सर्व्वं व्याप्य नारायणः स्थित इति श्रुतेः । यद्वा इदं सर्व्वमीशा परब्रह्मणा वास्यं वस निवासे इत्यस्य रूपं वासितम् उत्पादितं स्थापितं नियमितञ्च । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यमयत्येष त आत्मान्तर्य्याम्यमृत इत्यादि श्रुतेः । न केवलं प्रत्यक्षगम्यमीशा वास्यमपि तु सावरणं ब्रह्माण्डमित्याह यदिति । यत् किञ्च किञ्चित् श्रुतिप्रमाणसिद्धं जगत्यां जगत् स्थावरजङ्गमात्मकमशेषं विश्वमीशेनोत्पादितं स्थापितं नियमितञ्चेत्यर्थः । अतः कारणात् तेनेशा त्यक्तेन विसृष्टेन स्वादृष्टानुसारिणा विषयेण भुञ्जीथाः भोगाननुभवेः । इतोऽधिकं मा गृधः गृधु अभिकांक्षायां माकांक्षीः । इतो ममाधिकं भवत्विति बुद्धिं त्यजेत्यर्थः । परमात्माधीनत्वेन त्वदिच्छाया व्याहतत्वादिति भावः । एवं सत् धनं कस्य स्वित् स्विदिति निपातो वितर्के न कस्यापीत्यर्थः । स एष सर्व्वस्य वशी सर्व्वस्येशानः सर्व्वमिदं प्रशास्ति यदिदं किञ्चेत्यादिश्रुतेर्मुख्यदाता परमेश्वरो न स्वामि-सम्बन्धाश्लिङ्गितमन्यत् प्राणिजातमिति वैराग्येण भवितव्यमिति भावः ॥ १ ॥

## ईशोपनिषद्भाष्यरहस्यविवृतिः।

सत्यं ज्ञानमनन्तमीशमखिलस्यान्तर्बहिश्च स्थितं
यद्दूरे निकटे च यच्च सकलं यत् सप्रभं शक्तिमत्।
भक्तैर्वर्त्मकर सुगुप्तविभवं प्रेम्णैदमाम्नावितं
कृष्णाभिन्नमुपासितं विजयते गौराभिधं तन्महः॥
विद्याभूषणभाष्यकृद्गुरुवरश्रीपादपद्मं सदा
ध्यात्वा हृत्कमले यथा स्वमति तत्सिद्धान्तभक्तौस्तथा।
टीका नैकविधा विचार्य्य कुरुते श्यामोऽथ गोस्वामिकः
ईशाद्योपनिषद्रहस्यविवृतिं सिद्धान्तवाचस्पतिः॥

ईशा वास्यमित्यादिमन्त्रान् व्याचिख्यासुर्भाष्यकारस्तत्पूर्त्तये प्रथमं तावत् शिष्टाचारपरिप्राप्तेष्टदेवतानमस्काररूपं मङ्गलमाचरति वेदास्तयेति। विघ्नबाहुल्यशङ्कया वस्तुनिर्द्देशरूपं पुनर्मङ्गलमाचरति वेदेष्विति। अनेनैवेशा वास्यमित्यादिमन्त्राणां कर्म्मशेषत्वशङ्का निराकृता। तथाहि कर्म्मजड़ाः केचन मन्यन्ते स्म ईशा वास्यमित्यादयो मन्त्राः कर्म्मशेषा मन्त्रत्वाविशेषात् इषे त्वादिमन्त्रवत्। अतः पृथक् प्रयोजनाद्यभावादव्याख्येया इति। तान् प्रत्याह ईशा वास्यमित्यादीनामिति। कर्म्मस्विति। ईशा वास्यमित्यादीनां मन्त्राणामात्मयाथात्म्यप्रकाशकत्वेन विरोधादेव कर्म्मस्वविनियोग इतीतरेषां मन्त्राणां कर्म्मस्वविनियोगे कारणमुक्तम्। तत्र प्रथमाध्यायमारभ्य एकोनचत्वारिंशत्तमाध्यायपर्य्यन्तं तेषां तेषां मन्त्राणां तेषु तेषु दर्शपूर्णमासाद्यश्वमेधान्तेषु यथा विनियोगस्तथैव कर्म्मप्रतिपादकत्वाभावेऽपि सहस्रशीर्षेत्यादिवदीशा वास्यादीनामपि मन्त्राणां कर्म्मसु यथा कथञ्चन विनियोगः किं न स्यादिति चेन्नैवम्। ऋचा पुरुषं ब्रह्माणं दक्षिणतः पौरुषेण नारायणेनाभिष्टौति सहस्रशीर्षा पुरुष इत्यनेन षोड़शर्चेनेत्यादिवत् कर्म्मसु प्रमाणतो विनियोगाभावात् कर्म्मप्रतिपादकत्वाभावाच्च। तर्हि यागकल्पना कुतो न क्रियत इति चेन्न। विशेषं परित्यज्यैव सा कल्पना भविष्यति नेतरेति। अतएव भाष्यकारो विरोधादेवाविनियोगस्तेषां मन्त्राणां कर्म्मस्विति प्रतिपादयति। स्वातन्त्र्यसर्व्वकर्त्तृत्वसार्व्वज्ञ्यापुमर्थत्वादिधर्म्मकविज्ञानसुखस्वरूपात्मयाथात्म्यञ्च कर्म्मणा विरुध्यतेति युक्त एवैषां कर्म्मस्वविनियोगः। उपासनस्य तु आत्मयाथात्म्यप्रतिपादकत्वेनाविरोधादेव युक्त एवैषां तस्मिन् विनियोगः। तदेव स्फुटयन्नाह उपासना त्विति। जीवे परेशसाम्मुख्यरूपस्य जीवपरयोः सम्बन्धस्य आत्मयाथात्म्यज्ञानसापेक्षत्वादुपासनस्य च आत्मयाथात्म्यज्ञानद्वारेणैव तत्करणत्वादविरोध इति शेषः। अत इति।

तथा ह्यत्र निष्कामधर्म्मनिर्म्मलचित्तः सत्प्रसङ्गलुब्धः श्रद्धालुः शान्त्यादिमानधिकारी सम्बन्धो वाच्यवाचकभावः विषयो निरवद्यो विशुद्धानन्तगुणगणोऽचिन्त्यानन्तशक्तिः सच्चिदानन्दः पुरुषोत्तमः प्रयोजनन्त्वशेषदोषविनाशपुरःसरस्तत्साक्षात्कार इत्यनुबन्ध-चतुष्टयविशिष्टत्वाद्व्याख्यायते इति भावः। ईशेति क्विबन्तं तृतीयान्तं रूपम्। स्पष्टार्थमन्यत् ॥ १ ॥

## शाङ्करभाष्यम्।

ईशा वास्यमित्यादयो मन्त्राः कर्म्मस्वविनियुक्तास्तेषामकर्म्मशेषस्यात्मनो याथात्म्य-प्रकाशकत्वात्। याथात्म्यं चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम्। तच्च कर्म्मणा विरुध्यत इति युक्त एवैषां कर्म्मस्वविनियोगः। न ह्येवंलक्षण-मात्मनो याथात्म्यमुत्पाद्यं विकार्य्यमाप्यं संस्कार्य्यं वा कर्तृ भोक्तृ वा येन कर्म्मशेषता स्यात्। सर्व्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात्। गीतानां मोक्षधर्म्माणां चैवंपरत्वात्। तस्मादात्मनोऽनेकत्वकर्त्तृत्वभोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धकर्म्माणि विहितानि। यो हि कर्म्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिना-दृष्टेन स्वर्गादिना च द्विजातिरहं न काणकुण्ठत्वाद्यनधिकारधर्म्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्म्मस्विति ह्यधिकारविदो वदन्ति। तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनात्मविषयं स्वाभाविककर्म्मविज्ञानं निवर्त्तयन्तः शोकमोहादिसंसार-धर्म्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्तीति। एवमुक्ताभिधेयसम्बन्धप्रयोजना-न्मन्त्रान् सङ्क्षेपतो व्याख्यास्यामः।

ईशा। ईष्टे इतीट् तेनेशा। ईशिता परमेश्वरः परमात्मा सर्व्वस्य। स हि सर्व्वमीष्टे सर्व्वजन्तूनामात्मा सन्। तेन स्वेनात्मनेशा वास्यमाच्छादनीयम्। किम्। इदं सर्व्वं यत् किञ्च यत् किञ्चिज्जगत्यां पृथिव्यां जगत्। सर्व्वं स्वेनात्मनाहमेवेदं सर्वमिति परमार्थसत्यरूपेणानृतमिदं सर्व्वञ्चराचरमाच्छादनीयं परमात्मना। यथा चन्दनागुर्व्वादेरुदकादिसम्बन्धजक्लेदादिजं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन तद्वदेव हि स्वात्मन्यध्यस्तं स्वाभाविकं कर्तृत्वभोक्तृत्वादिलक्षणं जगद्द्वैतरूपं पृथिव्यां जगत्यामित्युपलक्षणार्थत्वात् सर्व्वमेव नामरूपकर्म्माख्यं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यात्। एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रय-सन्न्यास एवाधिकारो न कर्म्मसु तेन त्यक्तेन त्यागेनेत्यर्थः। न हि त्यक्तो मृतः पुत्रो भृत्यो वा आत्मसम्बन्धितयाभावादात्मानं पालयत्यतस्त्यागेनेत्ययमेवार्थः। भुञ्जीथाः

पालयेथाः। एवं त्यक्तैषणस्त्वं मा गृधः गृधिमाकाङ्क्षां माकार्षीर्धनविषयाम्। कस्य स्वित् कस्यचित् परस्वं धनं स्वस्य वा धनं माकाङ्क्षीरित्यर्थः। स्विदित्यनर्थको निपातः। अथवा मागृधः कस्मात्। कस्य स्विद्धनमित्याक्षेपार्थो न कस्यचिद्धनमस्ति यद्गृध्येत। आत्मैवेव सर्वमितीश्वरभावनया सर्वं त्यक्तमत आत्मन एवेदं सर्वमात्मैव च सर्वमतो मिथ्याविषयां गृधिं माकार्षीरित्यर्थः॥ १॥

## आनन्दगिरिकृतटीका।

येनात्मना परेणेशा व्याप्तं विश्वमशेषतः।
सोऽहं देहद्वयीः साक्षी वर्जितो देहतद्गुणैः॥ १॥

ईशा वास्यमित्यादिमन्त्रान् व्याचिख्यासुर्भगवान् भाष्यकारस्तेषां कर्म्मशेषत्वशङ्कां तावत् व्युदस्यति। तथाहि कर्म्मजड़ाः केचन मन्यन्ते ईशा वास्यमित्यादयो मन्त्राः कर्म्मशेषा मन्त्रत्वाविशेषादिषे त्वादिमन्त्रवत्। अतः पृथक्प्रयोजनाद्यभावादव्याख्येया इति तान् प्रत्याह। ईशा वास्यमित्यादय इति। कर्म्मस्वविनियुक्ता इति। इषे त्वेति शाखां छिनत्तीत्यादिवत् विनियोजकप्रमाणादर्शनात् प्रकरणान्तरत्वाच्चेत्यर्थः। श्रौतविनियोगाभावेऽपि वर्हिर्देवसदनं दामीत्यस्य वर्हिर्लवनप्रकाशनसामर्थ्यात् वर्हिर्लवने यथा विनियोगस्तथा कर्म्मशेषात्मप्रकाशनसामर्थ्येन कर्म्मस्वेषां विनियोग इत्यपि नाशङ्कनीयमित्याह। तेषामिति। शुद्धादिविशेषणत्वात्मनः कर्म्मशेषत्वे प्रमाणाभावात् याथात्म्यं न केवलं कर्म्मानुपयोगि किन्तु कर्म्मणा विरुध्यत इत्याह। याथात्म्यस्येति। शुद्धोऽहं स्वभावतो न तु केनापि पाप्मना विद्धः सर्व्वत्रैकोऽशरीर आकाशोपम इति जानन् कटाक्षेणापि न कर्म्म वीक्षते। किन्त्वापाततः प्रतिपत्तिरपीतादृशी निरुणद्ध्येव कर्म्मप्रवृत्तिमित्यर्थः। किञ्च यः कर्म्मशेषः स उत्पाद्यो दृष्टो यथा पुरोडाशादिः विकार्य्यः सोमादिः आप्यो मन्त्रादिः संस्कार्य्यो व्रीह्यादिस्तण्डुलाघातादिरूपत्वं व्यापकं व्यावर्त्तमानमात्मयाथात्म्यस्य कर्म्मशेषत्वमपि व्यावर्त्तयति। तथात्मयाथात्म्यं कर्तृ भोक्तृ च न भवति। येन ममेदं समीहितसाधनं ततो मया कर्त्तव्यमित्यहङ्कारान्वयपुरःसरः कर्त्रन्वयः स्यादित्याह। न चैवमिति। ननु उपनिषदि जपोपयोगित्वादन्यस्य च प्रमाणस्यादर्शनान्न निरूप्यमेव एतादृशमात्मयाथात्म्यं तत्राह। सर्व्वासामिति। यत्परः शब्दः स शब्दार्थ इति मीमांसाप्रसिद्धेः सर्व्वासामुपनिषदाञ्चैकात्म्ये तात्पर्य्यदर्शनान्न जपोपयोगित्वमुपनिषदां शक्यं वक्तुम्। तथा हि ईशा वास्यमित्युपक्रम्य स पर्य्यगाच्छुक्रमित्युपसंहारादनेजदेकं तदन्तरस्य सर्व्वस्येत्यभ्यासदर्शनान्नैनद्देवा आप्नुव-

भियपूर्व्वतासङ्कीर्त्तनात् को मोहः कः शोक एकत्वमनुपश्यत इति फलवत्तासङ्कीर्त्तनात् कुर्व्वन्नेवेहेति जिजीविषोर्भेददर्शिनः कर्म्मकरणानुवादेनासुर्य्या नाम त इति निन्दयैकात्मादर्शनस्य स्तुतत्वात्तस्मिन्नपो मातरिश्वा दधातीत्यभिधायिन्याश्चास्यास्तावदुपनिषदेकात्मतात्पर्य्यं दृश्यते। एवमन्यासामप्युपनिषदामुपक्रमोपसंहारैकरूप्याभ्यासापूर्व्वताफलवत्त्वार्थवादयुक्त्युपपादनानि षट् तात्पर्य्यलिङ्गानि विकल्पेन समुच्चयेन वास्माभिस्तत्त्वालोके दर्शितानीति नेह प्रतन्यन्ते। किञ्च प्रत्ययसंवादोऽपि बलवत् कारणम्। प्रसिद्धे विद्यते चोपनिषदर्थे गीतादिसंवादस्तस्मादुपनिषत्पदसमन्वयेनावगम्यमानमैकात्म्यं न प्रमाणान्तरानुपलम्भविरोधेनोपलम्भनीयम्। यथेन्द्रियान्तरेणानवगम्यमानमपि रूपं चक्षुषा गम्यमानं नापह्नुवते तथैकात्म्यमपि नापह्नवार्हमित्याह। गीतानामिति। समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यतीत्यादिगीता। एक एव हि भूतात्मा सर्व्वभूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्यादिमोक्षशास्त्राणाञ्चैकात्म्यपरत्वादित्यर्थः। यद्येतादृशमात्मतत्त्वं तर्हि निरधिकारित्वात् कर्म्मकाण्डमुच्छिद्येतेत्यपि नाशङ्कनीयमित्याह। तस्मादिति। औपनिषदात्मयाथात्म्यं च यथा तीव्रक्रोधाक्रान्तस्यान्तं प्रत्येव श्येनादिविधिप्रामाण्यं तथा मिथ्यादर्शिनं प्रत्येव कर्म्मविधिप्रामाण्यमित्यर्थः। अत्र जैमिनिप्रभृतीनां सम्मतिमाह। यो हीत्यादिना। अर्थित्वादियुक्तस्य कर्म्मण्यधिकारः षष्ठे प्रतिष्ठापितः। अर्थित्वादि च मिथ्याज्ञाननिदानम्। न हि नभोवन्निष्क्रियस्य स्वत एव दुःखासंसर्गिणः परमानन्दस्वभावस्य सुखं मे स्याद्दुःखं मे माभूदित्यर्थित्वम्। शरीरेन्द्रियसमर्थोऽहमित्यभिमानित्वं मिथ्याज्ञानं विना न सम्भवतीत्यर्थः। यस्मादात्मयाथात्म्यप्रकाशका मन्त्रा न कर्म्मशेषभूता न च मानान्तरविरुद्धास्तस्मात् प्रयोजनादिमत्त्वमपि तेषां सिद्धमित्याह। तस्मादित इति।

व्याख्येयत्वमुक्त्वा प्रतिपदं व्याचष्टे। ईशेति। ईश ऐश्वर्य्ये अस्य धातोः क्विपि लुप्ते कृदन्तरूपमीट् तस्य तृतीयैकवचनमीशेति। ननु कर्त्तरि क्विब्विधानात् परमेश्वरस्य चाक्रियत्वात् कथं क्विबन्तशब्दवाच्यतेति तत्राह। ईशितेति। मायोपाधीशनकर्तृत्वसम्भवाच्छब्दवाच्यता न विरुध्यते निरुपाधिकस्य च लक्ष्यत्वं भविष्यतीत्यर्थः। इशित्रीशितव्यभावेन तर्हि भेदः प्राप्त इत्याशङ्क्याह। सर्व्वजन्तूनामिति। यथादर्शादिषु प्रतिबिम्बानामात्मा बिम्बभूतो देवदत्त ईशिता भवति तथा कल्पभेदेनेशित्रीशितव्यभावसम्भवान्न वास्तवभेदानुमानं सम्भवतीत्यर्थः। वस आच्छादने। अस्य रूपं वास्यम्। तत्त्वत ईश्वरात्मकमेव सर्व्वं भ्रान्त्या यदनीश्वररूपेण गृहीतं तत् सर्व्वमीश्वर एवात्मैवेति ज्ञानेनाच्छादनीयं सर्व्वात्मक ईश्वरोऽस्मीति ज्ञातव्याशेषतत्त्वोपदेशश्छान्दोग्ये तत्त्वमसीति-

तदित्यर्थः। ब्रह्मैव सर्व्वमात्मैव सत्प्रकाशाविशेषतः। हेयोपादेयभावोऽयं न सत् स्वप्रवदिष्यते। उक्तञ्च। न बन्धोऽस्ति न मोक्षोऽस्ति न विकल्पोऽस्ति तत्त्वतः। नित्यप्रकाश एवास्ति विश्वाकारी महेश्वर इति। यस्यौपदेशिकज्ञानमात्रेणानृतदृष्टिर्न निराक्रियते तस्य विचारादिप्रयत्नेन तत्त्वप्रकाशे सत्यनृतदृष्टिस्तिरस्करिष्यत इत्यभिप्रेत्य दृष्टान्तमाह। यथेति। चन्दनागुर्व्वादेरुदकादिसम्बन्धादार्द्रीभावादिना जातं यद्दौर्गन्ध्यमौपाधिकं मिथ्या तद्यथा तत्स्वरूपनिवर्षणाभिव्यक्तेन स्वाभाविकेन गन्धेनाच्छाद्यते तद्वद्विचारादेः स्वरूपसद्भावान्मिथ्याबुद्धेर्बाधकत्वं सम्भवतीत्याह। तद्वदेव हीति। स्वभावोऽनादिरविद्या तत्कार्य्यं स्वाभाविकमित्यादिबाधत्वे योग्यत्वप्रदर्शनार्थं विशेषणम्। एवं विचारादिप्रयत्नवतोऽनृतदृष्टिरित्यसम्भावनामुक्त्वा युक्त्याभिज्ञस्य सर्व्वमिदमहं चेश्वर एवेति भावनायामधिकृतस्य युक्तिकुशलस्य च विचारेऽधिकृतस्य सर्व्वकर्म्मसन्न्यास एवाधिकार इह मन्त्रे विवक्षितस्तेन त्यक्तेनेत्यत्र त्यागपरामर्शनात् त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदमित्यन्यत्राप्युक्तत्वात् पुत्राद्येषणायाश्चित्तविक्षेपहेतुत्वेन प्रसिद्धत्वाच्चेत्यभिप्रेत्याह। एवमीश्वरात्मेति। चिकीर्षितं सन्न्यासं स्तौति। तेन त्यक्तेनेति। त्यागेनात्मा रक्षितः स्यान्निष्क्रियात्मस्वरूपावस्थानानुकूलत्वात् त्यागस्येत्यर्थः। सन्न्यासिनः शरीरसन्धारणोपयुक्तकौपीनाच्छादनभिक्षाशनादिव्यतिरिक्तेऽपि कथञ्चिद्द्रव्यपरिग्रहे रागश्चेत् प्राप्तस्तन्निरोधे यत्नः कर्त्तव्यः। तस्य प्रधानविरोधित्वादित्यभिप्रेत्य नियमविधिमाह। एवं त्यक्तैषण इति। स्विदिति निपातस्य सामान्यार्थत्वेऽपि कस्य स्विदिति चिन्तनार्थत्वमन्यत्र प्रसिद्धं तदिह न गृह्यते इत्यनर्थकमित्युक्तम्। व्यवहारदृष्ट्यात्मैवेदं सर्व्वशेषभूतं जड़स्य चित्परतन्त्रत्वादतः प्राप्ते विषये नाकाङ्क्षा कर्त्तव्या ॥ १ ॥

## সিদ্ধান্তানুবাদ।

উপনিষৎ-পাঠ-কালে শান্তিপাঠের নিয়ম গুরুপরম্পরাগত। "ওঁ পূর্ণমদঃ" ইত্যাদি মন্ত্রটি শান্তিপাঠে ব্যবহৃত হইয়া থাকে। ঐ মন্ত্রটির অর্থ এইরূপ ;—

"অদঃ অবতারিরূপম্ ইদম্ অবতাররূপম্ উভয়ং পূর্ণং সর্ব্বশক্তিমৎ। পূর্ণাদবতারিরূপাৎ পূর্ণমবতাররূপং লীলাবিস্তারায় স্বয়মুদচ্যতে প্রাদুর্ভবতি। তল্লীলাপূর্ত্তৌ পূর্ণস্যাবতাররূপস্য পূর্ণং স্বরূপমাদায় স্বস্মিন্নৈক্যং নীত্বা পূর্ণমবতারিরূপমন্যত্রাবিলীনং সদবশিষ্যতে তিষ্ঠতীত্যর্থঃ।"

পূর্ণ এই অবতারিরূপ ও পূর্ণ এই অবতাররূপ উভয়ই পূর্ণ অর্থাৎ সর্ব্বশক্তি-

সমন্বিত। পূর্ণ অবতারিরূপ হইতে পূর্ণ অবতাররূপ লীলাবিস্তারার্থ প্রাদুর্ভূত হয়েন। লীলাপূর্ত্তির জন্য পূর্ণ অবতাররূপের পূর্ণ স্বরূপকেই আপনাতে গ্রহণ পূর্ব্বক পূর্ণ অবতারিরূপ অবশেষরূপে বর্ত্তমান থাকেন। কোনরূপেই পরমেশ্বরের পূর্ণত্বের হানি হয় না।

শাস্ত্র দ্বিবিধ;—পৌরুষেয় ও অপৌরুষেয়। পুরুষপ্রণীত শাস্ত্রই পৌরুষেয় শাস্ত্র এবং পরমেশ্বরপ্রণীত শাস্ত্রের নামই অপৌরুষেয় শাস্ত্র। বেদশাস্ত্র পরমেশ্বরপ্রণীত, অতএব অপৌরুষেয়। সর্ব্বলৌকিকালৌকিক জ্ঞানের নিদানস্বরূপ অপ্রাকৃত অপৌরুষেয় বেদশাস্ত্র কাণ্ডত্রয়াত্মক। কর্ম্মকাণ্ড, জ্ঞানকাণ্ড ও উপাসনাকাণ্ড, এই তিনটি কাণ্ডই বেদের কাণ্ডত্রয়। তন্মধ্যে শেষোক্ত উপাসনাকাণ্ডেই বেদের মুখ্য তাৎপর্য্য। প্রথমোক্ত কাণ্ডদ্বয় উপাসনাকাণ্ডেরই অঙ্গভূত। যে কাণ্ডে দর্শপূর্ণমাসাদি অশ্বমেধান্ত কর্ম্ম সকল উক্ত হইয়াছে, তাহারই নাম কর্ম্মকাণ্ড। যে কাণ্ডে জীবাত্মা ও পরমাত্মার যাথাত্ম্য নির্ণীত হইয়াছে, তাহাই জ্ঞানকাণ্ড নামে অভিহিত হইয়া থাকে। আর যে কাণ্ডে পরমেশ্বরের সাম্মুখ্যলাভের উপায় সকল কীর্ত্তিত হইয়াছে, তাহাই উপাসনাকাণ্ড। জ্ঞানকাণ্ড ও কর্ম্মকাণ্ডের যেরূপ পরস্পর পার্থক্য পরিলক্ষিত হয়, উপাসনাকাণ্ডের সেরূপ পার্থক্য পরিদৃষ্ট হয় না। জ্ঞানকাণ্ড ও কর্ম্মকাণ্ডের যাহাতে পর্য্যবসান হয়, তাহাই উপাসনাকাণ্ড। প্রকৃত পক্ষে সমগ্র বেদই উপাসনাকাণ্ড। আপাততঃ বেদকে কর্ম্ম-জ্ঞান-রূপ-কাণ্ডদ্বয়াত্মক বলিয়াই প্রতীতি হয়। বহির্দৃষ্টিই তাদৃশী প্রতীতির কারণ। অন্তর্দৃষ্টিতে দর্শন করিলে, কর্ম্ম ও জ্ঞানের স্বাতন্ত্র্য দৃষ্ট হয় না। তদবস্থায় কর্ম্ম ও জ্ঞান উপাসনারই অঙ্গ বলিয়া স্থির হয়। কর্ম্ম ও জ্ঞানের স্বাতন্ত্র্য যদি না থাকিল, উহারা যদি উপাসনারই অঙ্গ হইল, তবে বেদকে একমাত্র উপাসনাপর বলিয়া সিদ্ধান্ত করাই সঙ্গত হইতে পারিল। কিন্তু সাধারণ লোক সকল সেরূপ সিদ্ধান্ত করেন না। তাঁহারা সমগ্র বেদকেই কর্ম্মপর বিবেচনা করিয়া থাকেন। যাঁহারা কর্ম্মকেই নিখিল পুরুষার্থের হেতু বলিয়া জানেন, তাঁহাদিগের পক্ষে ঐরূপ বিবেচনা অসঙ্গত হয় না। সত্য বটে, উপাসনার অঙ্গীভূত কর্ম্ম ও জ্ঞান নিখিল পুরুষার্থের হেতু। কিন্তু তাই বলিয়া কি সমস্ত কর্ম্ম ও সমস্ত জ্ঞানকেই নিখিল পুরুষার্থের হেতু বলা যাইতে পারে? সত্য বটে, ভক্তের সকল কর্ম্ম ও সকল জ্ঞানই উপাসনার অঙ্গ, কিন্তু

তাই বলিয়া কি যিনি নিজকৃত কর্ম্ম ও স্বোপার্জ্জিত জ্ঞানকে উপাসনার অঙ্গ বলিয়া স্বীকার করিতে প্রস্তুত নহেন, তাঁহার সেই সকল কর্ম্ম ও জ্ঞানকেও উপাসনার অঙ্গ বলিতে হইবে? তাহা কখনই নহে। বেদোক্ত সকল কর্ম্ম ও সকল জ্ঞানই উপাসনোদ্দেশ্যক হইলেও অনধিকারীর পক্ষে ঐ সকল কর্ম্মের ও জ্ঞানের স্বাতন্ত্র্যার্থ প্রদ্যোতিত হয়। এইরূপ হয় বলিয়াই এক বেদবাক্য অবলম্বনে মানবসমাজে বিভিন্ন মতের আবির্ভাব হইয়াছে। যিনি যেরূপ অধিকারী, অর্থাৎ যিনি তামস অধিকারী তিনি কর্ম্মকে যিনি রাজস অধিকারী তিনি জ্ঞানকে এবং যিনি সাত্ত্বিক অধিকারী তিনি উপাসনাকে বা তদঙ্গীভূত কর্ম্ম ও জ্ঞান উভয়কে পরমপুরুষার্থের সাধন বলিয়া ব্যাখ্যা করিতেছেন। কাল এই মতভেদের সহায়। ত্রিকালজ্ঞ বেদবাক্যসমূহ সর্ব্বজ্ঞ আচার্য্যের ন্যায় ঐ সকল মতের হেয়তা ও উপাদেয়তা পূর্ব্ব হইতেই স্থির করিয়া রাখিয়াছেন। আমরা আপনাপন বুদ্ধিবৈচিত্র্য অনুসারে ঐ হেয়োপাদেয়তা স্থির করিয়া লই। ভ্রান্তিবশতঃ আমরা কখন বা হেয়কে উপাদেয় বলিয়া স্বীকার করিয়া থাকি এবং কখন বা উপাদেয়কে হেয় বলিয়া ত্যাগ করিয়াও থাকি। করুণাময় জগদীশ্বর তদ্দোষের প্রশমনেরও উপায় করিয়া দিয়াছেন। বেদের প্রকৃত অর্থ প্রকাশের নিমিত্ত আমাদিগকে ইতিহাস ও পুরাণ সকল প্রদান করিয়াছেন। তদনুসারে বেদবিচারে প্রবৃত্ত হইলে, বেদের গূঢ়ার্থ সকল আপনা হইতেই প্রকাশিত হইয়া পড়ে। বেদের পূর্ব্বভাগের অর্থাৎ কর্ম্মকাণ্ডের গূঢ় অর্থ সকল উহার উত্তরভাগে অর্থাৎ উপনিষদভিধেয় জ্ঞানকাণ্ডে ব্যক্ত হইয়াছে। এবং জ্ঞানকাণ্ডের গূঢ় অর্থ ও তদর্থনির্ণায়ক বেদান্তসূত্র সকলের গূঢ় অর্থ আবার তদ্ভাষ্যভূত শ্রীমদ্ভাগবতে ও অপরাপর প্রসিদ্ধ পুরাণেতিহাসে ব্যক্ত হইয়াছে। বিদ্যাভূষণ মহাশয়ের ভাষ্যখানি বেদান্তার্থনির্ণায়ক শ্রীমদ্ভাগবতের অনুগত। অপরাপর ভাষ্যগুলির অধিকাংশ স্বকপোলকল্পিত। ঐ সকল ভাষ্যে কর্ম্মকেই নিখিল পুরুষার্থের হেতু, বিষ্ণুকে কর্ম্মের অঙ্গ, স্বর্গাদি কর্ম্মফলকে নিত্য, জীব ও প্রকৃতির স্বাতন্ত্র্য, পরিচ্ছিন্ন প্রতিবিম্বিত বা ভ্রান্ত ব্রহ্মেরই জীবত্ব এবং চিন্মাত্র ব্রহ্মের জ্ঞানেই মুক্তি প্রভৃতি সিদ্ধান্তিত হইয়াছে। স্বয়ং বেদই ঐ সকল দূষিত মতকে পূর্ব্বপক্ষ করিয়া উপনিষদ্ভাগে তাহার সুমীমাংসা প্রচার করি-

তেছেন। সমগ্র উপনিষদই একবাক্যে বলিতেছেন যে, ভগবান বিষ্ণু কর্ম্মের অঙ্গ নহেন, পরন্তু তিনি স্বাধীন ও নিত্যজ্ঞানসুখস্বরূপ পরমেশ্বর। তিনি সার্ব্বজ্ঞ্যাদি সর্ব্বগুণে বিমণ্ডিত। ঈশ্বর, জীব, প্রকৃতি, কাল ও কর্ম্ম, এই পাঁচটিই তত্ত্ব। তন্মধ্যে যিনি বিভুচৈতন্য তিনিই ঈশ্বর এবং যিনি অণুচৈতন্য তিনিই জীব। উভয়েই নিত্যজ্ঞানাদিগুণশালী। উভয়েই অস্মৎশব্দের বাচ্য এবং জ্ঞানস্বরূপ হইয়াও জ্ঞাতা। পরমেশ্বর স্বরূপশক্তিসমন্বিত। তিনিই জগতের সৃষ্টিস্থিতিপ্রলয়কর্ত্তা। তিনিই জীবের ভোগাপবর্গের বিধাতা। তিনি অব্যক্ত হইয়াও ভক্তিব্যঙ্গ্য। জীব বহু। পরেশবৈমুখ্য বশতই জীবগণের বন্ধ এবং তৎসাম্মুখ্য হইতেই মোক্ষ ও ভগবৎসাক্ষাৎকারসুখ। সত্ত্বাদি গুণত্রয়ের সাম্যাবস্থাই প্রকৃতি। প্রকৃতির নিজের কর্ত্তৃত্ব নাই। তিনি পরমেশ্বর কর্ত্তৃক প্রেরিত হইয়াই বিচিত্র জগৎ রচনা করেন। ভূতাদিব্যবহারহেতু জড় বা অজড়রূপে নির্দ্দেশের অযোগ্য দ্রব্যবিশেষের নামই কাল। উহা ঈশ্বরেরই চেষ্টা এবং সৃষ্টি ও প্রলয়ের নিমিত্ত। কর্ম্ম জড় এবং অদৃষ্টাদিশব্দব্যপদেশ্য। ঐ কর্ম্ম অনাদি ও বিনশ্বর। শেষোক্ত চারিটিই পরমেশ্বরের শক্তি। পরমেশ্বর অদ্বিতীয়। "ঈশা বাস্যম্" প্রভৃতি মন্ত্র সমূহে এই বিষয়গুলিই ক্রমান্বয়ে প্রকাশিত হইয়াছে। এই মন্ত্রগুলি কর্ম্মকাণ্ডীয় মন্ত্র সকলের সজাতীয় হইলেও কর্ম্মশেষ নহে। কারণ, এই মন্ত্রগুলিতে আত্মযাথাত্ম্য-জ্ঞান-প্রতিপাদন দ্বারা জীবের পরমেশ্বর-সাম্মুখ্য-সাধন উপাসনাই প্রচার করা হইয়াছে। অতএব এই মন্ত্রগুলি উপাসনাপর। যিনি পরমেশ্বরসাক্ষাৎকারাভিলাষী, তিনি যথারীতি এই মন্ত্রগুলির শ্রবণাদিতে রত হইবেন।

"ঈশা বাস্যম্" প্রভৃতি তিনটি মন্ত্রের অনুষ্টুভ ছন্দ। "ছাদয়তি এনং পাপাৎ কর্ম্মণঃ ইতি ছন্দঃ" যাহা পাপ কর্ম্ম হইতে রক্ষা করে, তাহারই নাম ছন্দ। এতদ্দ্বারা ঐ সকল ছন্দের আলোচনায় পাপপ্রবৃত্তির উপশম হয়, ইহাই সূচিত হইতেছে।

বেদ গদ্যপদ্যময়। বৈদিক গদ্যকে ব্রাহ্মণ বা নিগদ বলে। আর বৈদিক পদ্যের নাম ঋক্ অথবা মন্ত্র। বৈদিক মন্ত্রে প্রধানতঃ সাতটি ছন্দ দেখা যায়। যথা, গায়ত্রী, উষ্ণিক, অনুষ্টুভ, বৃহতী, পঙ্‌ক্তি, ত্রিষ্টুভ ও

জগতী। তন্মধ্যে গায়ত্রী ত্রিপদা। ইহার প্রত্যেক চরণে আট আটটি অক্ষর। তিন চরণে চতুর্বিংশতি অক্ষরে গায়ত্রী ছন্দ হয়। এই গায়ত্রীই সকল ছন্দের মূল। ইহাতেই চারি চারি অক্ষর বৃদ্ধি করিলে উষ্ণিক প্রভৃতি ছন্দ হয়। উষ্ণিকের অক্ষর-সংখ্যা অষ্টাবিংশতি। উহা হইতে চতুরক্ষরাধিকা অনুষ্টুভ। অনুষ্টুভ হইতে চতুরক্ষরাধিকা বৃহতী। বৃহতী হইতে চতুরক্ষরাধিকা পঙ্‌ক্তি। পঙ্‌ক্তি হইতে চতুরক্ষরাধিকা ত্রিষ্টুভ। এবং তাহা হইতে চতুরক্ষরাধিকা জগতী। বেদে উৎকৃতিপর্য্যন্ত সকল ছন্দই আছে। কিন্তু ঐ সকল ছন্দ পরে প্রকাশিত হয়। এই নিমিত্ত পূর্ব্বোক্ত সাতটি ছন্দই বৈদিক ছন্দ বলিয়া, শাস্ত্রে উক্ত হইয়াছে। গায়ত্রী প্রভৃতির ব্যুৎপত্তি যথা—

"গায়ত্যনয়েতি গায়ত্রী। অথবা গায়তো মুখাৎ ত্রিঃ ত্রিপদা উৎপতিতেতি গায়ত্রী। যদ্বা গায়ন্তং ত্রায়ত ইতি গায়ত্রীতি নিরুচ্যতে। গায়ত্র্যা ঊর্দ্ধং স্নিহতে ইষ্যতে ইতি উষ্ণিক্। গায়ত্রীমেব ত্রিপদাং সতীং চতুর্থেন পাদেন অনুষ্টোভতি বর্দ্ধয়তীতি অনুষ্টুভ্। ততোঽপি পরিবর্হণাৎ বৃহতী। ততোঽপি প্রপঞ্চাৎ পঙ্‌ক্তিঃ। পঙ্‌ক্তিঃ পঞ্চপদা। ত্রিবৃৎ বজ্রস্তং স্তোভতীতি ত্রিষ্টুভ্। গততমম্ অন্তিমং ছন্দ ইতি জগতী। যদ্বা জলচরগতিরিব গতির্যস্যা ইতি জগতী। পৃষোদরাদিত্বাৎ সাধুঃ।"

দধ্যঙ্‌ঙাথর্বণ ঋষি নিষ্কামধর্ম্মনির্ম্মলচিত্ত সৎপ্রসঙ্গলুব্ধ শ্রদ্ধালু শমদমাদি-সম্পন্ন উপাসনাধিকারী নিজ পুত্র ও শিষ্যকে বলিতেছেন—

এই স্থাবর-জঙ্গমাত্মক বিশ্বে যাহা কিছু আছে, সে সকলই পরমেশ্বর কর্ত্তৃক ব্যাপ্ত রহিয়াছে। তিনি যাহা দেন, তাহাই ভোগ কর। তিনিই বিশ্বের অধিপতি। তিনি ভিন্ন দ্বিতীয় অধিপতি নাই। তিনি যাহা দেন নাই, তাহা ভোগ করিতে অভিলাষ করিও না॥ ১॥

তাৎপর্য্য।—এই প্রত্যক্ষপ্রমাণসিদ্ধ ও শ্রুতিপ্রমাণসিদ্ধ স্থাবরজঙ্গমাত্মক নিখিল বিশ্বই পরমেশ্বর কর্ত্তৃক ব্যাপ্ত রহিয়াছে। তিনি জীবগণের অদৃষ্ট অনুসারে তাহাদিগের ভোগের নিমিত্ত এই বিশ্ব রচনা করিয়া তন্মধ্যে অনু-প্রবিষ্ট রহিয়াছেন। তিনিই ইহার পালনকর্ত্তা ও নিয়ামক বিধাতা। নিখিল

জগৎই তাঁহার শক্তি। তিনি ঐ শক্তির অধীশ্বর। তিনি যাহা দেন, জীব তাহাই প্রাপ্ত হয়েন, আর তিনি যাহা না দেন, জীব তাহা পাইতে পারেন না। জীব যতই পান, তাঁহার আকাঙ্ক্ষার নিবৃত্তি নাই। কিন্তু তাঁহার আকাঙ্ক্ষার পরিপূরণ না হওয়াতে চিত্তেরও শান্তি ঘটে না। পরমেশ্বরের কৃপায় আত্মসমর্পণ ভিন্ন জীব চরিতার্থ হইতে পারেন না। অতএব অদৃষ্টানুসারে ঈশ্বর যাহাকে যাহা দিয়াছেন, সে যদি তাহাতেই সন্তুষ্ট থাকে, আর অধিক আকাঙ্ক্ষা না করিয়া বিষয়বৈরাগ্যের সহিত পরমেশ্বরের করুণার উপর আত্মনির্ভর করে, তবে যথাকালে শুভাদৃষ্টের উদয়ে পরমেশ্বরসাম্মুখ্যলাভে চরিতার্থ হইতে পারে। আমার চেষ্টায় আমি অধিক লাভ করিতে পারিব, এরূপ জ্ঞান অহঙ্কারমূলক। অহঙ্কারীর পুরুষার্থসিদ্ধির সম্ভাবনা নাই। বিষয়ে অপেক্ষারহিত ও নিরহঙ্কার না হইলে, পরমেশ্বরের সাম্মুখ্য লাভ করা যায় না। দৈন্য ও নৈরপেক্ষ্যই উপাসনার মূল। দৈন্যমূলক ও নৈরপেক্ষ্যমূলক উপাসনাতেই বহির্মুখতার নিবৃত্তির সহিত অন্তর্মুখতার অভ্যুদয়ে পরমেশ্বরের সাম্মুখ্য ও তৎসাক্ষাৎকার লাভ হয়। উহাই জীবের পরম লাভ। অতএব তুচ্ছ বিষয়ে আসক্ত হইয়া পরম লাভ হইতে বিচ্যুত হওয়া কথনই যুক্তিসিদ্ধ নহে ॥ ১ ॥

**कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ २ ॥**

**वलदेवः।**—इदानीं चित्तशुद्ध्यर्थं विहितमवश्यमनुष्ठेयमित्याह कुर्व्वन्नेवेति। कर्म्माण्यग्निहोत्रादीनि निष्कामाणि कुर्व्वन्नेवेह लोके शतं शतसङ्ख्याकाः समाः संवत्सरान् शतवर्षपर्य्यन्तं जिजीविषेत् जीवितुमिच्छेत्। एवं त्वयि जिजीविषति कर्म्म कुर्व्वति च नरे इतः एतस्मात् अग्निहोत्रादिकर्म्माणि कुर्व्वतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्ति यद्वा तल्लिप्तत्वं नास्तीति भावः। तादृक् कर्म्म तु न लिप्यते ॥ २ ॥

**विवृतिः।**—इदानीमिति। जिजीविषेदिति। भवानिति शेषः। पुरुषव्यत्ययः प्रकरणात्। पुरुषायुषस्य शतवर्षपरिमितत्वात् शतग्रहणम्। कालाध्वनोरत्यन्तसंयोग इति द्वितीया। यावच्छक्ति कर्त्तव्यं न कदापि त्याज्यमिति। कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणीति। ब्रह्मण्याधाय कर्म्माणि सङ्ग

तदुक्ता मनीषिणः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति भगवद्वचनात्। त्वयीति। तव एवं कर्म्म कुर्व्वतो जिजीविषतो मुक्तिरस्ति प्रकारान्तरेण तु सा नास्तीति भावः। स्वर्गादिप्राप्तौ यथा नानोपायाः सन्ति न तथा मुक्तावित्यर्थः। ब्रह्मार्पणबुद्ध्या कृतकर्म्मणा शुद्धान्तःकरणस्यैव मुक्तिरित्याशयः। ननु कर्म्मणोऽवश्यं स्वर्गादिना फलेन भाव्यं कथं मुक्तिरिति चेत् तत्राह ताह्नगिति। मुक्त्यर्थं क्रियमाणं कर्म्म नरे मनुष्ये त्वयि न लिप्यते न बध्यते। स्वोचितेनासङ्कल्पितफलेन कर्म्मणा भगवन्तमाराधयन्तं नरमपि त्वां न कर्म्म बाधते तस्य मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपक्षीणशक्तित्वादित्यर्थः। उक्तं हि—द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्म्मो निवृत्तौ च विभाषित इति ॥ २ ॥

**शाङ्करः।**—एवमात्मविदः पुत्राद्येषणात्रयसन्न्यासेनात्मज्ञाननिष्ठतयात्मा रक्षितव्य इत्येष वेदार्थः। अथेतरस्यानात्मज्ञतयात्मग्रहणाशक्तस्येदमुपदिशति मन्त्रः। कुर्व्वन्नेव इह निर्व्वर्त्तयन्नेव कर्म्माण्यग्निहोत्रादीनि जिजीविषेज्जीवितुमिच्छेच्छतं शतसङ्ख्याकाः समाः संवत्सरान्। तावद्धि पुरुषस्य परमायुर्निरूपितम्। यथा प्राप्तानुवादेन यज्जिजीविषेच्छतं वर्षाणि तत् कुर्व्वन्नेव कर्म्माणीत्येतद्विधीयते। एवमेवम्प्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इत एतस्मादग्निहोत्रादीनि कर्म्माणि कुर्व्वतो वर्त्तमानात् प्रकारादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म्म न लिप्यते कर्म्मणा न लिप्यस इत्यर्थः। अतः शास्त्रविहितानि कर्म्माण्यग्निहोत्रादीनि कुर्व्वन्नेव जिजीविषेत्। कथं पुनरिदमवगम्यते। पूर्व्वेण मन्त्रेण सन्न्यासज्ञाननिष्ठतोक्ता द्वितीयेन तदशक्तस्य कर्म्मनिष्ठेत्युच्यते। ज्ञानकर्म्मणोर्विरोधं पर्व्वतवदकम्प्यं यथोक्तं न स्मरसि किम्। इहाप्युक्तं यो हि जिजीविषेत् स कर्म्म कुर्व्वन्। ईशा वास्यमिदं सर्व्वं तेन त्यक्तेन भुञ्जीथा मागृधः कस्य स्विद्धनमिति। न जीविते मरणे वा गृधिं कुर्व्वीतारण्यमियादिति च। ततो न पुनरेयादिति सन्न्यासशासनात्। उभयोः फलभेदञ्च वक्ष्यति। इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः क्रियापथश्चैवं पुरस्तात् सन्न्यासश्च। तयोः सन्न्यास एवातिरेचयति। न्यास एवात्यरेचयदिति तैत्तिरीयके। द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्म्मो निवृत्तौ च विभावित इत्यादि पुत्राय विचार्य्य निश्चितमुक्तं व्यासेन वेदाचार्य्येण भगवता। विभागञ्चानयोर्दर्शयिष्यामः ॥ २ ॥

**आनन्दगिरिः।**—परमार्थस्त्वात्मैव सर्व्वमित्याकाङ्क्षाविषय एव नास्तीत्यर्थः। आद्यमन्त्रस्य पूर्व्वार्द्धेन तत्त्वोपदेशः कृतस्तृतीयपादेनापरिपक्वज्ञानस्य सन्न्यासविधिरुक्तश्चतुर्थपादेन सन्न्यासिनो नियमविधिरुक्त इति प्रतिपदं व्याख्याय सङ्क्षेपार्थमनु-

वदन्युत्तरस्य सम्बन्धाभिधित्सया। एवमात्मविद इत्यादिना। पूर्व्वमन्त्रेण ज्ञानं विहितं यस्य तस्यैवोत्तरमन्त्रेण कर्म्म विहितं ततः समुच्चयानुष्ठाने तात्पर्य्यं मन्त्रद्वयस्येत्येकदेशी शङ्कामुद्भावयति। कथं पुनरिति। शुद्धब्रह्मज्ञानकर्म्मणोरेकाधिकारे विरुद्धत्वात् ऊर्द्ध्वगमनविदग्धिधर्म्मवदस्त्वेव तत्रापि क्रमेणैककर्त्तृकत्वमिति चेन्न। विशिष्टरूपभेदाद्भिन्नाधिकारत्वात्। यच्चोक्तम्। ज्ञानकर्म्मणोर्विहितत्वे शुक्तिसाम्याद्विरोधोऽसिद्ध इति तदसत्। ऊर्द्ध्वगमनविदग्धिधर्म्मयोरप्यविरोधप्रसङ्गात्। तदुभयं नैकस्य विहितमिति चेत्तुल्यमेतत्प्रतिषेधात्तत्र न समुच्चय इति चेदिहापि न कर्म्मणा न प्रजया नानुध्यायेद्बहूञ्छब्दानित्यादिप्रतिषेधस्तुल्यः केवलकर्म्मविषयो निषेध इति न च वाच्यं केवलपदव्यवच्छेद्याभावात् समुच्चयविधेरद्याप्यनिश्चितत्वात्तस्मान्न समुच्चये तात्पर्य्यं मन्त्रद्वयस्येत्याह। ज्ञानकर्म्मणोर्विरोधमिति। कर्त्तृत्वाद्यध्यासाश्रयं कर्म्म शुद्धत्वादप्रमेयत इति सम्बन्धग्रन्थे यथोक्तं सहानवस्थानलक्षणं विरोधं किं न स्मरसि येनैकाधिकारत्वं तयोः कल्पयसीत्यर्थः। मन्त्रलिङ्गादपि तयोर्भिन्नाधिकारत्वं प्रतीयत इत्याह। इहाप्युक्तमिति। जिजीविषो रागिणः कर्म्म विहितं सर्व्वमीश्वर एवेति ज्ञानवतस्त्यागी विहितः। किञ्च धनसम्पन्नस्यैव कर्म्मण्यधिकारः। प्रथममन्त्रार्थाधिकारिणश्च धनाकाङ्क्षानिषेधेन कर्म्माधिकारनिषेधः प्रतीयत इत्यर्थः। जिजीविषा हि कर्म्माधिकारिण एव न ज्ञानाधिकारिण इत्यत्र प्रमाणमाह। न जीवित इति। अरण्यं स्त्रीजनासङ्कीर्णमाश्रममियाद्गच्छेदिति वेदशास्त्रनिश्चितस्ततोऽरण्यवासोपलक्षितात्सन्न्यासविधानादित्यर्थः। इतश्च नैकफलकामस्य ज्ञानकर्म्मणोरधिकारः प्रतिपत्तव्य इत्याह। उभयोरिति। को मोहः कः शोक एकत्वमनुपश्यत इति सनिदानार्थप्रहाणं ज्ञानफलं वक्ष्यति। संसारमण्डलान्तरगतमेव देशान्तरप्राप्त्यापन्नं हिरण्यगर्भपदप्राप्त्यादिलक्षणं कर्म्मफलं वक्ष्यति। अग्ने नय सुपथेत्यन्ते नेत्यर्थः। नारायणोपनिषद्वाक्यमपि भिन्नाधिकारत्वे सति प्रमाणयति। इमौ द्वावेवेति। पुरस्तात् सृष्टिकालेऽनुनिष्क्रान्ततरौ भूतसृष्टिमनुप्रवृत्तौ भिन्नाधिकारत्वात् द्वौ। तयोः सन्न्यास एवातिरिक्तः श्रेष्ठो भवति परमपुरुषार्थव्यवधानादित्यर्थः। व्यासवाक्यमपि संवादकमाह। द्वाविमाविति ॥ २ ॥

সিদ্ধান্তানুবাদ।—অনন্তর চিত্তশুদ্ধির নিমিত্ত বিহিত কর্ম্ম অবশ্য অনুষ্ঠেয়, ইহাই বলিতেছেন ;—

ইহলোকে শাস্ত্রোক্ত কর্ম্ম সকল যথাবিধানে অনুষ্ঠান

করিলে, মনুষ্য একশত বৎসর জীবিত থাকিতে পারেন। তিনি তাঁহার ঐ সুদীর্ঘ জীবনে ঈশ্বরার্পণবুদ্ধিতে যে কিছু কর্ম্ম করিবেন, তাহা তাঁহাতে লিপ্ত হইবে না। বিশেষতঃ তাদৃশ অনুষ্ঠান ভিন্ন অন্য কোন প্রকারে মুক্তিলাভ করিতে পারা যায় না॥ ২ ॥

তাৎপর্য্য।—মনুষ্যের পরমায়ুর পরিমাণ একশত বৎসর। কিন্তু অনাচার ও অত্যাচারে ঐ আয়ুর ক্ষয় হয় বলিয়া অধিকাংশ লোক ঐ নির্দ্দিষ্ট কালের পূর্ব্বেই গতায়ু হইয়া থাকেন। যিনি বিধিবিধানে শাস্ত্রোক্ত আচার পালন করেন. তিনি কখনই অকালে কালগ্রাসে পতিত হয়েন না। দীর্ঘজীবন লাভ সৌভাগ্যের কথা। আত্মযাথাত্ম্যজ্ঞানোপযোগী এই জীবন যদি অসময়ে ক্ষয় প্রাপ্ত হয়, বিকাশোপযোগী কুসুম যদি মুকুলেই বিনষ্ট হইয়া যায়, তদপেক্ষা ক্ষোভের বিষয় ক্ষতির বিষয় আর কি আছে! যে ভগবদুপাসনা দ্বারা পুরুষার্থ লাভ করিতে হইবে, তাহা অবশ্য অবসরসাপেক্ষ। মানবজীবন শতবর্ষব্যাপী হইলেও অবসরবিবেচনায় অত্যল্প। পণ্ডিতগণ বলিয়া থাকেন, "শতং জীবতি যদ্যল্পং নিদ্রা তস্যার্দ্ধহারিণী। বাল্যরোগজরাদুঃখৈস্তদর্দ্ধমপি হীয়তে॥" আমাদিগের শতবর্ষপরিমিত জীবনের অর্দ্ধাংশ নিদ্রায় এবং অবশিষ্টার্দ্ধেরও অধিকাংশই বাল্য, রোগ ও জরা প্রভৃতিতে বৃথা অপব্যয়িত হইয়া থাকে। অতএব প্রথমতঃ সুদীর্ঘ জীবন লাভের চেষ্টা, পরে ঐ জীবনকে ঈশ্বরারাধনা দ্বারা সফল করিবার চেষ্টাই আমাদিগের একান্ত কর্ত্তব্য। উভয়ই কর্ম্মসাপেক্ষ। সৎকর্ম্ম ভিন্ন দীর্ঘজীবন লাভ ও চিত্তশুদ্ধির কোনটিই হয় না। চিত্তশুদ্ধি ভিন্ন আত্মযাথাত্ম্যজ্ঞানসাধন ভগবদ্ভজনও সুসিদ্ধ হয় না। তদ্ব্যতিরেকে মুক্তিও ঘটে না। সত্য বটে, কর্ম্মের ফল স্বর্গাদিভোগ। উহাও লৌহশৃঙ্খলের পরিবর্ত্তে স্বর্ণশৃঙ্খলে বন্ধনের ন্যায় জীবের বন্ধন ভিন্ন আর কিছুই নহে, ইহাও সত্য। কিন্তু কর্ম্ম দ্বিবিধ; প্রবৃত্তিসাধক সকাম কর্ম্ম এবং নিবৃত্তিসাধক নিষ্কাম কর্ম্ম; সকাম কর্ম্মই জীবকে বন্ধন করে, ভজনের অঙ্গীভূত নিষ্কাম কর্ম্ম তাহা করে না। দৈন্য ও নৈরপেক্ষ্য সহকারে অনুষ্ঠিত ভগবদারাধনলক্ষণ নির্ম্মল কর্ম্ম জীবকে বন্ধন করিতে পারে না। ঐ সকল

কর্ম্ম পদ্মপত্রে সলিলের ন্যায়, জীবে লিপ্ত হয় না। অতএব তাদৃশ কর্ম্মই জীবের অনুষ্ঠেয়। উহাই মুক্তির অনন্য সাধন ॥ ২ ॥

**असुर्य्या नाम ते लोका अन्धेन तमसावृताः।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥**

**वलदेवः।**—अथ काम्यपरान् निन्दति असुर्य्या इति। ये के च ये केचित् जनाः आत्मानं घ्नन्ति संसारे सम्बन्धयन्तीत्यात्महनः ते प्रेत्य मृत्वा तान् लोकान् अभिगच्छन्ति। लोकाः कथम्भूता इत्यपेक्षायामाह असुर्य्या नाम इत्यादि। असुर्य्या असुरप्राप्याः नाम ते लोका अन्धेन गाढ़ेन तमसा आवृताः संवृता इत्यर्थः। अविद्वांसः काम्यपराः आत्महन्तारो जनाः मृत्वा दुरन्ततमसावृतमसुरलोकं गच्छन्तीति भावः ॥ ३ ॥

**विवृतिः।**—अयेति। अभीति। अभिराभिमुख्ये। असुराणामिमे असुर्य्याः. असुषु प्राणेषु एव रमन्ते इत्यसुराः प्राणपोषणमात्रपरा अज्ञानिनः केवलविषयासक्तास्तैः प्राप्या असुर्य्याः। पुनः कीदृशाः—अन्धेन तमसा अज्ञानात्मकेन तमसा आवृता आच्छादिताः। अज्ञानाधिक्यकारिण इत्यर्थः। अनात्मज्ञाः पुनः पुनर्जायन्ते म्रियन्ते चेति भावः। उक्तं हि श्रीभगवता—कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्म्मुक्ताः पदं गच्छन्त्यनामयमिति। अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचाविति। तस्मात् यथायोगं वर्णाश्रमविहितकर्म्मणा भगवन्तमाराधयंस्तत्प्रसादेन निवृत्तस्वान्तःकलुषो जातवैराग्य आत्मविन्मुक्तो भवतीति प्रघट्टकार्थः ॥ ३ ॥

**शाङ्करः।**—अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते। असुर्य्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरास्तेषां च स्वभूता असुर्य्याः। नामशब्दोऽनर्थको निपातः। ते लोकाः कर्म्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानि। अन्धेनादर्शनात्मकेनाज्ञानेन तमसावृता आच्छादितास्तान् स्थावरान्तान् प्रेत्य त्यक्त्वेमं देहमभिगच्छन्ति यथा कर्म्म यथा श्रुतम्। ये के चात्महनः। आत्मानं घ्नन्तीति आत्महनः। के ते। येऽविद्वांसः। कथं ते आत्मानं नित्यं हिंसन्ति। अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात्। विद्यमानस्यात्मनो यत् कार्य्यं फलमजरामरत्वादि-संवेदनादिलक्षणं तद्धतस्येव तिरोभूतं भवतीति प्राकृता अविद्वांसो जना आत्महन उच्यन्ते। तेन ह्यात्महननदोषेण संसरन्ति ते ॥ ३ ॥

**आनन्दगिरिः।**—आद्यमन्त्रार्थं प्रपञ्चयितु प्रथममविद्वन्निन्दा क्रियते इत्याह। अथेति। ते लोका इति तच्छब्दो यच्छब्दार्थे। यथाश्रुतमिति येन येन यादृशं प्रतिषिद्धं विहितं वा देवताविज्ञानमनुष्ठितं स तत्तदनुरूपामेव योनिमाप्नोतीत्यर्थः। आत्महन्तृत्वस्योदरभेदिनि प्रसिद्धेः कथमविद्वांस आत्महन इत्याह। कथं ते इति। उदरभेदिनोऽध्यात्माधिकारे प्रसङ्गाभावादशुद्धत्वाध्यासेन तिरस्कार एवात्महन्तृत्वमित्याह। अविद्यादोषेणेति। यथा कस्यचिच्छुद्धस्य मिथ्याभिशापो शस्त्रवध उच्यते तद्वदात्मनि पापित्वाद्यध्यासोऽपि हिंसैवेत्यर्थः। अजरामरत्वादिलक्षणोऽहमिति संवेदनमभिधानञ्च यत् कार्य्यं तदपि हतस्येव न दृश्यत इति हननमुपचर्य्यत इत्याह। विद्यमानस्येति। अस्यात्मघातस्य प्रायश्चित्तविधानादर्शनात् संसरणमेव फलमित्याह। तेन हीति॥ ३॥

**সিদ্ধান্তানুবাদ।**—অনন্তর কাম্যকর্ম্মপরায়ণ লোক সকলের নিন্দা করিতেছেন;—

যাহারা আত্মঘাতী, তাহারা মৃত্যুর পর প্রগাঢ় তিমিরাবৃত অসুরলোকেই গমন করিয়া থাকে॥ ৩॥

তাৎপর্য্য।—এই মানবজীবন মোক্ষোপযোগী। যিনি ঈদৃশ জীবন প্রাপ্ত হইয়াও তাহার সদ্ব্যবহার করেন না, যিনি দুর্লভ মানবজন্ম প্রাপ্ত হইয়াও ভবসাগর সমুত্তরণের চেষ্টা করেন না, তিনিই আত্মঘাতী। আত্মঘাতীর সত্বর উদ্ধার নাই। তিনি মৃত্যুর পর ভোগলুব্ধ স্বার্থপর লোক সকলের নিবাসভূত গাঢ়ান্ধকারাবৃত নরকে গমন করেন। পক্ষান্তরে নিষ্কাম ভগবৎ-পরায়ণ সাধু পুরুষ সকল উপাসনা দ্বারা মোক্ষলাভে কৃতার্থ হইয়া আত্মানন্দে ভাসিতে থাকেন। এরূপ লোকের ইহলোকে পুনরাবৃত্তি হয় না। অতএব বুদ্ধিমান ব্যক্তি কর্ম্মফলে আকাঙ্ক্ষারহিত হইয়া স্ববর্ণাশ্রমবিহিত কর্ম্ম দ্বারা ভগবানের আরাধনা করিতে করিতে তৎপ্রসাদে চিত্তশুদ্ধির অনন্তর ঈশ্বরাতিরিক্ত বিষয়সমূহে নিরপেক্ষ ও ঈশ্বরে সমাসক্ত হইবেন। এইরূপ হইলে মুক্তি স্বয়ং তাঁহার সেবা করিবে। নতুবা তৎকৃত সকাম কর্ম্মের ফলে তাঁহাকে পুনঃ পুনঃ ইহ সংসারেই গতায়াত করিতে হইবে, এবং তাঁহার অজ্ঞানান্ধকার ক্রমশই ঘনীভূত হইয়া পরমেশ্বরসাক্ষাৎকারের সম্ভাবনা পর্য্যন্ত বিলুপ্ত করিবে॥ ৩॥

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्व्वमर्षत्।**
**तद्धावतोऽन्यानत्येति तिष्ठत्यस्मिन्नपो मातरिश्वा दधाति ॥ ४॥**

**बलदेवः ।**—ब्रह्मविज्ञानमेव मुक्तिसाधनमित्युक्तम्। तद्ब्रह्म किंविधमित्यत आह अनेजदिति। त्रिष्टुप्छन्दस्कोऽयमन्त्रः। अनेजदकम्पनमचलदभयमिति वा। एकं समाधिकरहितम्। यद्वा सर्व्वभूतेषु विज्ञानघनरूपेणैकम्। मनसो जवीयः वेगवत्तरं तदप्राप्यम्। देवा इन्द्रियाणि ब्रह्माद्या वा एनत् एतत् ब्रह्म न आप्नुवन् गोचरीकुर्व्वन्ति। अत्र हेतुः पूर्व्वमर्षदित्यादि। पूर्व्वमर्षत् पूर्व्वमेव गतं जवनान्मनसोऽपि। किञ्च लोकविलक्षणं लक्षणान्तरमाह तिष्ठदिति। तिष्ठतीति तिष्ठत् स्वस्थाने स्थितमपि सर्व्वगतत्वात् धावतः द्रुतं गच्छतः अन्यान् मन-आदीन् अत्येति अतिक्रम्य तिष्ठति अचिन्त्यशक्तित्वादित्यर्थः। किञ्च मातरिश्वा वायुः क्रियात्मकः अपः कर्म्माणि प्राणिनां चेष्टालक्षणानि दधाति धारयति। यद्वा मातरिश्वा यस्मिन् सर्व्वकर्म्माणि स्थापयतीति ॥ ४ ॥

**विवृतिः ।**—ब्रह्मविज्ञानमेवेति। अनेजदिति। एज़ कम्पने। न एजतीत्यनेजत् अजरोऽमृतोऽभयो ब्रह्मेति श्रुतेरभयमिति। समाधिकरहितमिति। न तत्समश्चाभ्यधिकश्च दृश्यते इति श्वेताश्वतरोक्तेः। एको देवः सर्व्वभूतेषु गूढ़ इत्यादिश्रुतिबलादाह यद्वेति। मनस इति। मनसो जवीयः मनो हि वेगवत् प्रसिद्धं ततोऽपि जवीयः वेगवत्तरं जवोऽस्यास्तीति जववदत्यन्तं जववदिति जवीयः ईयसुनि कृते विन्मतोर्लुगिति मतुपो लुक्। देहस्थस्यापि मनसोऽतिदूरस्थब्रह्मलोकादिसङ्कल्पनं क्षणमात्राद्भवतीति मनसो वेगवत्तरत्वं तस्याप्यगम्यत्वात् ब्रह्म मनसोऽपि जवीय इत्युपपद्यते। देवा इति। देवा द्योतमानाश्चक्षुरादयोऽप्येनन्न आप्नुवन् प्राप्तवन्तः मनसोऽगम्यत्वात्। किञ्च ब्रह्माद्या देवा अपि एनत् ब्रह्म नाप्नुवन् कार्त्स्न्येन नाजानन्निति भावः। पूर्व्वमिति। सर्व्वजगत्कारणं यतो वा इमानीत्यादिश्रुतेः। अर्षदिति। ऋष गतौ। अर्षतीत्यर्षत् ज्ञानस्वरूपं सत्यं ज्ञानमनन्तमितिश्रुतेः। सर्व्वजगत्कारणत्वात् ज्ञानस्वरूपत्वाच्च मनसोऽपि जवनमतीत्य वर्त्तत इति शेषः। मातरिश्वेति। मातरि अन्तरिक्षे श्वयति वर्द्धत इति मातरिश्वा वायुः टु ओ श्वि इर् गतिवृद्ध्योरिति धातोः। अप इति कर्म्मनाम। कार्य्यकारणजातानि यस्मिन्नोतानि प्रोतानि च यश्च सूत्रसंज्ञः सर्व्वस्य जगतो विधारयिता सर्व्वप्राणभृच्चेष्टकः सोऽपि वायुः प्राणिनां चेष्टालक्षणानि कर्म्माणि तस्मिन् ब्रह्मणि स्वाधिष्ठाने सति दधाति सर्व्वचेष्टको वायुस्तस्यापि चेतयितृ ब्रह्मेत्यर्थः।

भीषास्माद्वातः पवत इति श्रुतेः। यद्वेति। मातरिश्वा वायुः अपः कर्म्माणि आप्यन्ते प्राप्यन्ते सुखदुःखानि याभिस्ता अपः कर्म्माणि आप्नोतेर्कर्मण्यर्थे क्विप् धातोर्कर्मस्व तानि कर्म्माणि यज्ञहोमादीनि यस्मिन् दधाति स्थापयति सर्व्वप्राणिकर्म्माणि समर्पयतीत्यर्थः। देवा गातुविदो गातुं वित्वा गातुमीतमनसस्पत इमं नो देवदेवेषु यज्ञं स्वाहा वाचि स्वाहा वाते वा इति समिष्टयजुर्मन्त्रे वायुस्थत्वोक्तेः सर्व्वकर्म्माणि तावत् वायौ स्थाप्यन्ते समष्टिव्यष्टिरूपोऽसौ वायुरपि तानि सर्व्वाणि तस्मिन् दधात्यतो यागहोमादीनां कर्म्मणां परमास्पदत्वं ब्रह्मलक्षणमित्यर्थः॥ ४॥

**शङ्करः।**—यस्यात्मनो हननादविद्वांसः संसरन्ति यद्विपर्य्ययेण विद्वांसो मुच्यन्ते तत् कीदृशमात्मतत्त्वमित्युच्यते। अनेजत् न एजत्। एजृ कम्पने। कम्पनं चलनं स्थिरत्वप्रच्युतिस्तद्वर्जितं सर्व्वदा एकरूपमित्यर्थः। तच्चैकं सर्व्वभूतेषु मनसः सङ्कल्पादिलक्षणात् जवीयो जववत्तरम्। कथं विरुद्धमुच्यते। ध्रुवं निश्चलमिदं मनसो जवीय इति च। नैष दोषः। निरुपाध्युपाधिमत्त्वोपपत्तेः। तत्र निरुपाधिकेन रूपेणोच्यते अनेजदेकमिति। मनसोऽन्तःकरणस्य सङ्कल्पविकल्पलक्षणस्योपाधेरनुवर्त्तनादिह देहस्थस्य मनसो ब्रह्मलोकादिदूरस्थसङ्कल्पनं क्षणमात्राद्भवतीत्यतो मनो जविष्ठं लोके प्रसिद्धम्। तस्मिन् मनसि ब्रह्मलोकादीन् द्रुतं गच्छति सति प्रथमं प्राप्त इवात्मचैतन्याभासो गृह्यतेऽतो मनसो जवीय इत्याह। नैनद्देवा द्योतनाद्देवाश्चक्षुरादीनीन्द्रियाणि एतत् प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः। तेभ्यो मनो जवीयो मनोव्यापारव्यवहितत्वात्। आभासमात्रमप्यात्मनो नैव देवानां विषयीभवति। यस्माज्जवनान्मनसोऽपि पूर्व्वमर्षत् पूर्व्वमेव गतम्। व्योमवद्व्यापित्वात्। सर्व्वव्यापि तदात्मतत्त्वं सर्व्वसंसारधर्म्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्व्वाः संसारविक्रिया अनुभवतीवाविवेकिनां मूढ़ानामनेकमिव च प्रति देहं प्रत्यवभासत इत्येतदाह। तद्धावतो द्रुतं गच्छतोऽन्यान्मनोवागिन्द्रियप्रभृतीनात्मविलक्षणान् अत्येति अतीत्य गच्छतीव। इवार्थं स्वयमेव दर्शयति। तिष्ठदिति। स्वयमविक्रियमेव सदित्यर्थः। तस्मिन्नात्मतत्त्वे सति नित्यचैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वयति गच्छतीति वायुः सर्व्वप्राणभृत् क्रियात्मको यदाश्रयाणि कार्य्यकारणजातानि यस्मिन्नोतानि प्रोतानि च यत् सूत्रसंज्ञकं सर्व्वस्य जगतो विधारयितृ स मातरिश्वा। अपः कर्म्माणि प्राणिनां चेष्टालक्षणानि। अग्न्यादित्यादीनां ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि दधाति विभजतीत्यर्थः। धारयतीति वा। भीषास्माद्वातः पवते इत्यादिश्रुतिभ्यः। सर्व्वा हि कार्य्यकारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्व्वास्पदभूते सत्येव भवन्तीत्यर्थः॥ ४॥

**आनन्दगिरिः।**—उत्तरमन्त्रमवतारयति। यस्मात्मन इत्यादि। अविक्रियमेवश्चेदात्मतत्त्वं कथं केचन स्वर्गगामिनः केचन नरकगामिन इति सांसारिकव्यवस्था स्यात् मन उपाधिनिबन्धनेत्यभिप्रेत्याह। मनस इत्यादिना। उपाधेरनुवर्त्तमानात् विक्रियादिव्यवहाराश्रयत्वमिति शेषः। ननु मनसो देहान्तःस्थत्वाद्बहिर्गमनायोगात् कथं वेगवत्त्वमित्याशङ्क्याह। देहस्थस्येति। जवीयस्त्वादश्वादिवत्तर्हि चक्षुरादिग्राह्यत्वं प्राप्तमित्याशङ्क्याह। नैनद्देवा इति। चक्षुरादिप्रवृत्तेर्मनोव्यापारपूर्व्वकत्वात्तदविषयत्वे चक्षुरादिविषयत्वमप्यात्मनो न सम्भवतीत्यर्थः। मनसो वा कथं न विषय आत्मेत्यत आह। यस्मादिति। यथा मनःस्थं परिमाणं मनसो न विषयोऽत्यन्ताव्यवधानात्तथात्माप्यत्यन्ताव्यवधानान्मनसो न विषयस्तद्व्यापकत्वाच्चेत्यर्थः। उक्तात्मसाङ्गवचनयोगोपपत्तिमाह। तस्मिन्नात्मतत्त्वे सतीति। श्रौतानि कर्म्माणि सोमाज्यपयःप्रभृतिभिरद्भिः सम्पाद्यन्त इति सम्बन्धाल्लाक्षणिकोऽप्शब्दः कर्म्मणस्तु प्राणिचेष्टायाश्चाव्निमित्तत्वप्रसिद्धेः। कारणवाचकः शब्दः कार्य्योपलक्षणया प्रयुक्त इत्यर्थः। ईश्वरस्यापि हिरण्यगर्भस्य नियतप्रवृत्त्यन्यथानुपपत्त्याधिष्ठाता परमेश्वरः सम्भाव्यत इत्युक्तमिदानीं मातरिश्वग्रहणमुपलक्षणार्थमादाय तात्पर्य्यमाह। सर्व्वा हीति ॥ ४ ॥

সিদ্ধান্তানুবাদ।—যাঁহার সাক্ষাৎকার লাভে জীবের চরিতার্থতা সিদ্ধ হইবে, এক্ষণে সেই পরমেশ্বরের স্বরূপ নির্দ্দেশ করিতেছেন ;—

আত্মা নিশ্চল ও সদা একরূপ। তিনি মন হইতেও বেগবান। তিনি ইন্দ্রিয়বর্গ ও তদধিষ্ঠাতা দেবতাগণেরও অগ্রগামী, অতএব উহারা তাঁহাকে জ্ঞানবিষয়ীভূত করিতে পারে না। তিনি সর্ব্বগত, স্বস্থানে থাকিয়াও দ্রুতগামী মন প্রভৃতিকে অতিক্রম করেন। তাঁহার অধিষ্ঠানবশতই বায়ু কার্য্য করিতেছে। এই মন্ত্রটির ত্রিষ্টুভ ছন্দ ॥ ৪ ॥

তাৎপর্য্য।—আত্মা বিকারবর্জ্জিত, অতএব তাঁহার চাঞ্চল্য সম্ভব হয় না। তাঁহার সমান বা তাঁহা হইতে অধিক কিছুই নাই। তিনি বিজ্ঞানঘনস্বরূপে সদা একরূপ। ইহ সংসারে মনই সর্ব্বাপেক্ষা বেগবান। মন দেহস্থ হইয়াও ক্ষণমধ্যে অতিদূরবর্ত্তী ব্রহ্মলোকাদিরও সঙ্কল্প করিতে পারে। কিন্তু ব্রহ্ম

তদপেক্ষা বেগবত্তর। কারণ মনও তাঁহাকে অনুসন্ধান করিয়া পায় না। মন, ইন্দ্রিয় সকল ও তদধিষ্ঠাতা দেবতা সকল অতি দ্রুত ধাবিত হইয়াও তাঁহাকে আত্মগোচর করিতে পারে না। তিনি স্বভাবতই উহাদিগকে অতিক্রম করিয়া অবস্থান করিতেছেন। মন ও ইন্দ্রিয় প্রভৃতি প্রভূত চেষ্টা করিয়াও সাকল্যে ব্রহ্মবস্তুকে বিষয়গোচর করিতে সমর্থ হয় না। আবার সর্ব্বপ্রাণভৃচ্চেষ্টক প্রাণবায়ু যে কার্য্য করিতেছে, তাহাও ঐ ব্রহ্মের অধিষ্ঠান ব্যতিরেকে সিদ্ধ হয় না। অতএব এক ব্রহ্মই সকলের বিধাতা ও পরমাস্পদ ॥ ৪ ॥

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके।**

**तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य वाह्यतः ॥ ५ ॥**

**বলদেবঃ।**—রহস্যং সকৃদুক্তং ন চিত্তমারোহতীতি পূর্ব্বমন্ত্রোক্তমপি পুনর্বদতি তদিতি। অনুষ্টুপ্। তৎ প্রকৃতমাত্মতত্ত্বম্ এজতি চলতি তদেব ন এজতি চ স্বতো নৈব চলতি অচলমেব সৎ মূঢ়দৃষ্ট্যা চলতীবেত্যর্থঃ। যদ্বা নৈজতি নৈজয়তি সদাচারান্ পরিত্রাণায় সাধূনামিত্যুক্তেঃ। কিঞ্চ তদ্দূরে দূরদেশেঽস্তি বর্ষকোটিশতৈরপি অবিদুষামপ্রাপ্যত্বাৎ দূরে ইবেত্যর্থঃ। তদ্বন্তিকে তদু অন্তিকে বিদুষাং হৃদ্যবভাসমানত্বাদন্তিক ইবাত্যন্তং সমীপ ইব। ন কেবলং দূরেঽন্তিকে অস্তি কিন্তু অস্য সর্ব্বস্য নামরূপক্রিয়াত্মকস্য জগতোঽন্তরভ্যন্তরে তদেবাস্তি। অস্য সর্ব্বস্য বাহ্যতো বহিরপি তদু তদেবাস্তি আকাশবদ্ব্যাপকত্বাৎ ॥ ৫ ॥

**বিবৃতিঃ।**—রহস্যমিতি। মন্ত্রস্যাস্যার্থান্তরমপ্যস্তি। তদ্যথা। পূর্ব্বং কারণরূপমুক্তমিদানীং কার্য্যরূপমুদ্দিশতি তদিতি। তদাত্মতত্ত্বমেজতি সর্ব্বজন্তুরূপেণ স্থিতং সচ্চলতি তদেব নৈজতি স্থাবররূপাবস্থং ন চলতি। তদ্দূরে আদিত্যনক্ষত্ররূপেণ স্থিতত্বাৎ। তদু অন্তিকে ধরাদিরূপেণ স্থিতত্বাৎ। অস্য সর্ব্বস্য প্রাণিজাতস্য অন্তর্মধ্যে অন্তর্য্যামিরূপেণ স্থিতং তদেব যো বিজ্ঞানে তিষ্ঠন্ বিজ্ঞানাদন্তরো যং বিজ্ঞানং ন বেদ যস্য বিজ্ঞানং শরীরং যো বিজ্ঞানমন্তরো যময়তীতি শ্রুতেঃ। অস্য সর্ব্বস্য জগতো বাহ্যতঃ তদু তদেব কালরূপেণ বিদ্যমানত্বাৎ। অন্তর্বহিঃ পুরুষকালরূপৈরিতি সাত্বত শ্রুতেঃ ॥ ৫ ॥

**শঙ্করঃ।**—ন মন্ত্রাণাং জামিতাস্তীতি পূর্ব্বমন্ত্রোক্তমপি অর্থং পুনরাহ। তদাত্মতত্ত্বং যৎ প্রকৃতমেজতি চলতি তদেব চ নৈজতি স্বতো নৈব চলতি অচলমেব

সচ্চলতীবেত্যর্থঃ। কিঞ্চ তদ্দূরে বর্ষকোটিশতৈরপ্যবিদুষামপ্রাপ্যত্বাদ্দূর ইব। তদ্বন্তিকে সমীপেঽত্যন্তমেব বিদুষামাত্মত্বান্ন কেবলং দূরেঽন্তিকে চ। তদন্তরভ্যন্তরে সর্ব্বস্য। আত্মা সর্ব্বান্তর ইতি শ্রুতেঃ। অস্য সর্ব্বস্য জগতো নামরূপক্রিয়াত্মকস্য তদু সর্ব্বস্যাস্য বাহ্যতো ব্যাপিত্বাদাকাশবন্নিরতিশয়সূক্ষ্মত্বাদতঃ প্রজ্ঞানঘন এবেতি শাসনান্নিরন্তরম্ ॥ ৫ ॥

**আনন্দগিরিঃ।**—জানিতা আত্মস্বম্। ব্যাপিত্বাদ্বাহ্যতোঽস্তি নিরতিশয়সূক্ষ্মত্বাদন্তর্শ্চাস্তি তর্হি নিরন্তরমেকরসং ন স্যাৎমানাভাবাদিত্যাশঙ্ক্যাহ। প্রজ্ঞানঘন এবেতি ॥ ৫ ॥

সিদ্ধান্তানুবাদ।—অতি গুহ্য বিষয় একবার বলিলে হৃদয়ঙ্গম করা যায় না, অতএব পূর্ব্বমন্ত্রোক্ত বিষয়টি পুনর্ব্বার বলিতেছেন ;—

**আত্মতত্ত্ব সচল হইয়াও অচল, দূরস্থ হইয়াও সমীপবর্ত্তী ; উহা সকলের অন্তঃস্থ হইয়াও বাহ্যগত। এই মন্ত্রটির অনুষ্টুভ ছন্দ ॥ ৫ ॥**

তাৎপর্য্য।—আত্মা স্বরূপতঃ অচল হইয়াও অজ্ঞ জীবের সম্বন্ধে সচলের ন্যায়ই প্রতিভাত হইয়া থাকেন। ফলতঃ তিনি অচল হইয়াও নিজ অচিন্ত্যশক্তিপ্রভাবে সচলভাবেই প্রকাশিত হয়েন। তিনি সদা স্বধামস্থ হইয়াও সাধুগণের পরিত্রাণের নিমিত্ত সদাচারপ্রবর্ত্তনার্থ এই প্রপঞ্চে অবতার স্বীকার করিয়া থাকেন। তিনি এতদূর দূরবর্ত্তী যে অজ্ঞ ব্যক্তি সকল শতকোটিবর্ষের চেষ্টাতেও তাঁহার নিকট গমন করিতে পারেন না, অথচ তিনি অতি নিকটস্থ, সদাই সাধুগণের হৃদয়ে বিরাজ করিতেছেন। তিনি এই নাম-রূপক্রিয়াত্মক জগতের অন্তর্য্যামিস্বরূপে অবস্থান করিতেছেন। তিনি এই পরিদৃশ্যমান সংসারে ওতপ্রোতভাবে রহিয়াছেন। তিনি আকাশের ন্যায় ব্যাপক বস্তু। তিনি এই জগতের অভ্যন্তরেও যেরূপ বিরাজ করিতেছেন, ইহার বাহিরেও তদ্রূপ ইহাকে সর্ব্বতোভাবে আবরণ করিয়া রহিয়াছেন। বস্তুতঃ এই সংসার তাঁহারই শক্তির প্রকাশ। তিনি ভিন্ন কিছুই নাই। তাঁহার আশ্রয় ব্যতিরেকে, অধিষ্ঠান ব্যতিরেকে কোন বস্তুই থাকিতে পারে না। তিনি স্বীয় অচিন্ত্যশক্তিপ্রভাবে সর্ব্ববিধ বিরুদ্ধ গুণের আশ্রয় হইয়া বিরাজ করিতেছেন। নিখিল বিরোধী গুণ তাঁহাতেই সামঞ্জস্য ধারণ করিতেছে ॥ ৫ ॥

यस्तु सर्व्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्व्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥

**वलदेवः ।**—अथोपासनाप्रकारमाह यस्त्विति। अनुष्टुप्। यः पुनरधिकारी सर्व्वाणि भूतानि अव्यक्तादिस्थावरान्तानि चेतनाचेतनानि आत्मन् आत्मनि एव अनुपश्यति ब्रह्मण्येव सर्व्वाणि भूतानि स्थितानीति जानाति आत्मानं ब्रह्म च सर्व्वभूतेषु अनुपश्यति ततस्तस्मात् दर्शनात् न विजुगुप्सते जुगुप्सां नाप्नोति मुक्तो भवतीत्यर्थः ॥ ६ ॥

**विवृतिः ।**—अथोपासनेति। आत्मन्निति सप्तम्या लुक्। विजुगुप्सते इति। गुपधातोः स्वार्थे सन्प्रत्ययः। यो मां पश्यति सर्व्वत्र सर्व्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यतीति भगवद्वचनसमानार्थकोऽयं मन्त्रः ॥ ७ ॥

**शङ्करः ।**—यस्तु परिव्राड्मुमुक्षुः सर्व्वाणि भूतानि अव्यक्तादीनि स्थावरान्तान्यात्मन्येवानुपश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः। सर्व्वभूतेषु च तेष्वेव चात्मानं तेषामपि भूतानां स्वमात्मानमात्मत्वेन यथास्य कार्य्यकारणसङ्घातस्यात्माऽहं सर्व्वप्रत्ययसाक्षिभूतश्चेताः केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्व्वभूतेषु चात्मानं निर्व्विशेषं यस्त्वनुपश्यति स ततस्तस्मादेव दर्शनान्न विजुगुप्सते जुगुप्सां घृणां न करोति। प्राप्तस्यानुवादोऽयम्। सर्व्वा हि घृणात्मनोऽन्यद्दुष्टं पश्यतो भवत्यात्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमस्तीति प्राप्तमेव। ततो न विजुगुप्सत इति ॥ ६ ॥

**आनन्दगिरिः ।**—उक्तात्मज्ञानस्य फलं विधिनिषेधातीतजीवन्मुक्तस्वरूपेणावस्थानमित्याह। यस्त्विति ॥ ६ ॥

সিদ্ধান্তানুবাদ।—অনন্তর উপাসনার প্রকার বলিতেছেন ;—

যিনি অব্যক্তাদি স্থাবরান্ত চেতনাচেতন সর্ব্বভূতকে আত্মাতে এবং আত্মাকে সর্ব্বভূতে দর্শন করেন, তিনি আর কখন অধোগতি প্রাপ্ত হয়েন না। তাদৃশ অধিকারীর মুক্তি অবশ্যম্ভাবিনী। এই মন্ত্রটির অনুষ্টুভ ছন্দ।

তাৎপর্য্য।—এই মন্ত্রটিতে অতি সঙ্ক্ষেপে উপাসনা ও উপাসনার অধিকারী প্রদর্শিত হইয়াছে। অপরাপর অধিকারীর ন্যায় উপাসনার অধিকারীও উত্তম, মধ্যম ও কনিষ্ঠ ভেদে ত্রিবিধ। উক্ত ত্রিবিধ অধিকারীর

কথাই এই মন্ত্রে বলা হইয়াছে। সাত্ত্বত পুরাণ শ্রীমদ্ভাগবতে উক্ত হইয়াছে,—"অর্চ্চায়ামেব হরয়ে পূজাং যঃ শ্রদ্ধয়েহতে। ন তদ্ভক্তেষু চান্যেষু স ভক্তঃ প্রাকৃতঃ স্মৃতঃ॥" যিনি মানবরচিত শ্রীবিগ্রহকেই শ্রীহরিবুদ্ধিতে শ্রদ্ধাপূর্ব্বক অর্চ্চনা করেন, কিন্তু তদীয় ভক্ত সকলের পূজা করেন না, তিনিই নিম্নশ্রেণীর ভক্ত বা অধিকারী; কারণ, তিনি সাধনমার্গেই অবস্থিত। তাঁহার হৃদয়ে ভাবোদ্রেক হয় নাই। তিনি তখনও ভক্তের হৃদয়ে ভগবানের নিবাস হৃদয়ঙ্গম করিতে সমর্থ হয়েন নাই। মধ্যম অধিকারী ইঁহা হইতে অনেকাংশে উৎকৃষ্ট। তল্লক্ষণ যথা, শ্রীমদ্ভাগবতে। "ঈশ্বরে তদধীনেষু বালিশেষু দ্বিষৎস্বপি। প্রেমমৈত্রীকৃপোপেক্ষা যঃ করোতি স মধ্যমঃ॥" মধ্যম অধিকারীর ঈশ্বরে প্রেম, তদ্ভক্তে মৈত্রী, ঈশ্বরতত্ত্বানভিজ্ঞ ব্যক্তিতে কৃপা ও স্বমতবিরোধী ব্যক্তিতে উপেক্ষা দৃষ্ট হইয়া থাকে। উত্তম অধিকারীর ত কথাই নাই। তিনি স্থাবরজঙ্গমাত্মক নিখিল সংসারেই শ্রীভগবানকে দর্শন করেন এবং সমস্ত বিশ্ব শ্রীভগবানে সন্দর্শন করেন। তাঁহার দৃষ্টিতে নিখিল সংসারই ভগবৎক্ষেত্র এবং ভগবানই সংসারের অদ্বিতীয় আশ্রয়। অতএব তখন তিনি সকল বস্তুকেই প্রেমনয়নে অবলোকন করেন। তাঁহার সম্বন্ধে এই দুঃখশোকময় সংসার সুখের ও প্রেমের আগার হইয়া উঠে। ভক্তের এই অবস্থা অতি উচ্চ অবস্থা। ইহাই পরমেশ্বরে অনন্যমমতার অবস্থা। এই অবস্থাতে জীবের নিখিলেন্দ্রিয়বৃত্তি ভগবন্মুখী হয়। সুতরাং ভক্ত তখন সর্ব্ববিষয়ে নিরপেক্ষ হইয়া দীনতার সহিত সর্ব্বেন্দ্রিয়বৃত্তিদ্বারা তত্তদধিপতি শ্রীভগবানের সেবা করিতে—উপাসনা করিতে থাকেন। এইরূপ উপাসনায় আত্মার সুদৃঢ় অজ্ঞানাবরণ উন্মুক্ত হইয়া যায়। ভক্ত সর্ব্বত্রই ভগবানের পরমমধুর রূপ দর্শন করিতে থাকেন। তখন তাঁহায় হৃদয়ে ভগবানের গুণাবলীর স্ফূর্ত্তির সহিত তদীয় বিচিত্র লীলারসের আস্বাদন—মাধুর্য্যানুভব হইতে থাকে। ভগবান মাধুর্য্যরসের সাগর। সুতরাং যে ভক্ত একবার ঐ সাগরে অবগাহন করেন, তাঁহাকে আর পুনর্ব্বার রসান্তরাস্বাদনার্থ অন্যত্র কুত্রাপি গমন করিতে হয় না। তিনি মুক্ত হয়েন—পরমপুরুষার্থসিদ্ধিতে চরিতার্থ হয়েন। ইহাই উপাসনার শেষ সীমা। ইহাই প্রকৃত নির্ব্বাসন অবস্থা॥ ৬॥

यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ ७॥

**बलदेवः।**—इममेवार्थं द्वितीयो मन्त्रो वदतीत्याह यस्मिन्निति। अनुष्टुप्। यस्मिन्नवस्थाविशेषे विजानतः सर्व्वाणि भूतानि आत्मनि सन्ति आत्मा च सर्व्वभूतेष्वस्तीति विशेषेण ज्ञानवतः पुरुषस्य सर्व्वं खल्विदं ब्रह्मेत्यादिवाक्यार्थविचारेण सर्व्वाणि भूतान्यात्मैवाभूद्भवन्ति। तत्रावस्थाविशेष एकत्वमात्मैकत्वमनुपश्यतस्तस्य को मोहः कः शोकश्च। शोकश्च मोहश्चाज्ञानतो भवतीति॥ ७॥

**विवृतिः।**—इममेवेति। यस्मिन्निति। ज्ञानिनः सर्व्वभूतेष्ववस्थितः आत्मा एक एवेति ज्ञानं भवति। सर्व्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्व्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तत इति श्रीभगवदुक्तेः। तत्रेति। अविद्याकार्य्ययोः शोकमोहयोः सर्व्वथासम्भवात् सकारणकस्य संसारस्यात्यन्तमुच्छेदो भवति। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे इतिश्रुतेः॥ ७॥

**शङ्करः।**—इममेवार्थमन्योऽपि मन्त्र आह। यस्मिन् सर्व्वाणि भूतानि यस्मिन् काले यथोक्तात्मनि वा तान्येव भूतानि सर्व्वाणि परमार्थात्मदर्शनात् आत्मैवाभूदात्मैव संवृत्तः परमार्थं वस्तु विजानतस्तत्र तस्मिन् काले तत्र चात्मनि वा कः शोकः को मोहः। शोकश्च मोहश्च कामबीजमज्ञानतो भवति। न चात्मैकत्वं विशुद्धं गगनोपमं पश्यतः को मोहः कः शोक इति। शोकमोहयोरविद्याकार्य्ययोराक्षेपेणासम्भवप्रदर्शनात्। सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति॥ ७॥

**आनन्दगिरिः।**—इममेवार्थमन्योऽपि मन्त्र आह। यस्मिन्निति। निरतिशयानन्दः स्वत एव दुःखास्पृष्टमात्मानमजानतो भवति हा हतोऽहं न मे पुत्रोऽस्ति न चैवमिति। ततः पुत्रादीन् कामयते तदर्थं देवताराधनादि चिकीर्षति तत्रात्मैकत्वं पश्यतस्ततोऽन्वयव्यतिरेकाभ्यां शोकादेरविद्याकार्य्यस्यानवधारणान्मूलाविद्यानिवृत्त्यैव शोकादेरात्यन्तिकनिवृत्तिर्विद्याफलत्वेन विवक्षिता। लयनावस्य सुषुप्तेऽपि भावादित्याह। शोकश्च मोहश्चेत्यादिना॥ ७॥

সিদ্ধান্তানুবাদ।—উক্ত বিষয়টি পুনর্ব্বার দৃঢ় করিয়া বলিতেছেন;—

যে অবস্থায় ভক্তের সর্ব্বভূতে আত্মদর্শন হয়, সেই অবস্থায় ঐ আত্মদর্শীর কোন শোক বা কোন মোহই থাকিতে পারে না। এই মন্ত্রটিরও অনুষ্টুভ ছন্দ ॥ ৭ ॥

তাৎপর্য্য।—জ্ঞানী ব্যক্তি সর্ব্বভূতে একই আত্মাকে দর্শন করেন। এতাদৃশ জ্ঞানী শ্রেষ্ঠ ভক্ত। এক শ্রীভগবানের শক্তি সর্ব্বভূতে বিরাজিত, ইহাই ভক্তের অনুভব। তিনি জানেন, ব্রহ্মাদি স্তম্ব পর্য্যন্ত সকল পদার্থই শ্রীভগবানের শক্তি। পৃথক্ দৃষ্টি অজ্ঞানের কার্য্য। যতদিন অজ্ঞান থাকে, যতদিন পর্য্যন্ত হৃদয়ে ভগবত্তত্ত্বের অভ্যুদয় না হয়, ততদিনই সংসারের স্বাতন্ত্র্যবোধ। ভগবত্তত্ত্বের স্ফূর্ত্তিতে ঐ ভেদজ্ঞান অন্তর্হিত হইয়া যায়। সুতরাং তৎকালে সর্ব্বভূতেই আত্মশক্তির—ভগবৎ-শক্তির স্ফূর্ত্তি—সাক্ষাৎকার হইয়া থাকে। ভগবৎ-শক্তির অভ্যুদয়ে—তৎসাক্ষাৎকারে অবিদ্যা-কার্য্য শোক-মোহের সম্ভাবনা কোথায়? অতএব তাদৃশ ভক্ত তৎকালে জীবাত্ম-যাথাত্ম্য-জ্ঞান-সহকৃত পরমাত্ম-যাথাত্ম্য-জ্ঞান লাভে চরিতার্থ হয়েন। ভগবৎপ্রেমানন্দে নিমগ্ন হয়েন। এই অবস্থা চিন্মাত্র-ব্রহ্ম-নির্ব্বাণাবস্থা নহে। কারণ, এই অবস্থায় ভক্ত আপনাকে ও স্বাতিরিক্ত নিখিল সংসারকে শ্রীভগবানের শক্তি জানিয়া ও শ্রীভগবানকে ঐ শক্তির পরমাশ্রয় জানিয়া তাঁহাতেই প্রেম করিয়া থাকেন। প্রেমিকের প্রেম কখনই নির্ব্বিষয় হইতে পারে না—শূন্যে লয় পাইতে পারে না। উহার বিষয় অবশ্যই থাকিবে। সচ্চিদানন্দঘনবিগ্রহ উপাস্য শ্রীভগবানই উহার বিষয়—আশ্রয়। লীলাময় সবিশেষ শ্রীভগবানই ভক্তিরসিকের উপাস্য তত্ত্ব। নির্ব্বিশেষ-ব্রহ্ম-তত্ত্ব কখনই উপাস্য হইতে পারেন না। অতএব তৎকালে সর্ব্বত্রই শ্রীভগবানের একত্ব অনুভূত হইলেও শ্রীভগবান নিজ অচিন্ত্য বিশেষ দ্বারা ভক্তের সম্বন্ধে তাদৃশী অবস্থাতেও সবিশেষরূপেই স্বকীয় লীলারসের পোষণ করিতে থাকেন ॥ ৭ ॥

স পর্য্যগাচ্ছুক্রমকায়মব্রণমস্নাবিরং শুদ্ধমপাপবিদ্ধম্।
কবির্মনীষী পরিভূঃ স্বয়ম্ভূর্যাথাতথ্যতোঽর্থান্ ব্যদধাৎ
শাশ্বতীভ্যঃ সমাভ্যঃ ॥ ৮ ॥

**बलदेवः।**—एवम्भूतात्मज्ञानिनः फलमाह स इति। जगती। योऽधिकारी पूर्व्वोक्तप्रकारेणात्मानं पश्यति स ईदृशमात्मानं पर्य्यगात् पर्य्यगाप्नोति। कीदृशम्—शुक्रं शुक्लं शुद्धं विज्ञानानन्दस्वभावम् अकायं न विद्यते भोगार्थं कायः शरीरं यस्य तम् अव्रणम् अच्छिद्रं पूर्णम् अस्नाविरं न विद्यन्ते स्नावाः शिरा यस्य सोऽस्नाविरस्तम्। अत्रैव हेतुगर्भं विशेषणमाह। शुद्धमनुपहतम्। तदेव स्पष्टयति। अपापविद्धं धर्म्माधर्म्मवर्ज्जितम्। कायादिरहितोऽपि परमात्मा जगत्सर्ज्जनादि करोत्यचिन्त्यशक्तित्वादित्याह कविरिति। ज्ञानी यं पर्य्येति स आत्मा शाश्वतीभ्यः समाभ्यः शाश्वतीषु समासु याथातथ्यतः यथार्थस्वरूपान् अर्थान् पदार्थान् व्यदधात् विदधाति। कीदृशः सः—कविः सर्व्वज्ञः मनीषी मेधावी परिभूः सर्व्वस्य वशी स्वयम्भूः स्वतन्त्रः॥ ८॥

**विवृतिः।**—एवम्भूतात्मज्ञानिन इति। पर्य्यगादिति। छन्दसि लुङ्लङ्लिट् इति सूत्राद्वर्त्तमाने लुङ्। अकायमिति सूक्ष्मशरीरनिषेधः अस्नाविरमिति स्नावोपलक्षितधातुमयस्थूलशरीरनिषेध इत्यपौनरुक्त्यम्। शाश्वतीभ्य इति विभक्तिव्यत्ययः। याथातथ्यतः इति। याथातथाभावो याथातथ्यं तेन भेदे तृतीया। परिभूरिति। परिभवति सर्व्वं वशीकरोति इति परिभूः। स्वयम्भूरिति। स्वयमेवान्यदनपेक्ष्य भवतीति स्वयम्भूः। यद्वा स प्रकृतः परमात्मा परितः अगात् सर्व्वं व्यापत्। शुक्रमित्याद्याः शब्दाः पुंस्त्वेन विपरिणम्याः स इत्युपक्रमात्। शुक्रो दीप्तिमान्। अकायोऽस्नाविर इति स्थूलसूक्ष्मदेहशून्यः। अव्रण. अक्षतः विनाशशून्यः। शुद्धः रागाद्यनाविलः। अपापविद्धः कर्म्मशून्यः। कविः सर्व्वज्ञः। मनीषी चतुरः। परिभूः मायाभिभवी। स्वयम्भूर्निर्हेतुकः। याथातत्यतः सत्यतया। ऋतं सत्यं समीचीनं सम्यक् तथ्यं यथातथम् इति हलायुधः। अर्थान् महादानीन्। समाः सम्वत्सरान् व्याप्य। सम्वत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः इत्यमरः॥ ८॥

**शङ्करः।**—योऽयमतीतैर्मन्त्रैरुक्त आत्मा स स्वेन रूपेणेत्याहायं मन्त्रः। स पर्य्यगात् स आत्मा पर्य्यगात् परि समन्तादगादगतवान् आकाशवद्व्यापीत्यर्थः। शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थः। अकायमशरीरो लिङ्गशरीरवर्ज्जित इत्यर्थः। अव्रणमक्षतम्। अस्नाविरं स्नावाः शिरा यस्मिन्न विद्यन्त इत्यस्नाविरम्। अस्नाविरमव्रणमित्याभ्यां स्थूलशरीरप्रतिषेधः। शुद्धं निर्म्मलम्। अपापविद्धं धर्म्माधर्म्मादिपापवर्जितमिति। शुक्रमित्यादीनि वचांसि पुंलिङ्गत्वे परिणेयानि। स पर्य्यगादित्युपक्रम्य कविर्मनीषीति पुंलिङ्गत्वेनोपसंहारात्। कविः क्रान्तदर्शी सर्व्वदृक्। नान्योऽतोऽस्ति द्रष्टेत्यादि श्रुतेः। मनीषी मनस ईशिता सर्व्वज्ञ ईश्वर इत्यर्थः। परिभूः सर्व्वे-

षामुपर्य्युपरि भवतीति परिभूः। स्वयम्भूः स्वयं भवतीति येषामुपरि भवति यश्चोपरि भवति स सर्व्वः स्वयमेव भवतीति स्वयम्भूः। स नित्यमुक्त ईश्वरो याथातथ्यतः सर्व्वज्ञत्वाद्यथातथाभावो याथातथ्यं यथाभूतकर्म्मफलसाधनतोऽर्थान् कर्त्तव्यपदार्थान् व्यदधाद्विहितवान् यथानुरूपं व्यभजदित्यर्थः। शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यः इत्यर्थः॥ ८॥

**आनन्दगिरिः।**—योऽयमिति। स्नु प्रस्नवणे धातुः। स्नावयन्ति शरीरमिति स्नावाः शिराः॥ ८॥

**সিদ্ধান্তানুবাদ।**—অনন্তর উক্ত আত্মজ্ঞানীর—ভক্তপ্রবরের ঐ আত্মজ্ঞানের—ভক্তির ফল নির্দ্দেশ করিতেছেন ;—

**পূর্ব্বোক্ত আত্মতত্ত্বদর্শী ভক্ত শুদ্ধ, অশরীর, অক্ষত, শিরারহিত, নির্ম্মল, ধর্ম্মাধর্ম্মবিবর্জ্জিত, সর্ব্বজ্ঞ, মেধাবী, মায়াভিভবী, স্বয়ম্ভূ ও মহদাদি তত্ত্ব সকলের সৃষ্টিকর্ত্তা পরমাত্মাকে প্রাপ্ত হয়েন॥ ৮॥**

তাৎপর্য্য।—আত্মতত্ত্বজ্ঞ ভক্ত আত্মার আত্মা পরমাত্মাপরপর্য্যায় শ্রীভগবানকেই প্রাপ্ত হয়েন। ঐ ভগবান অনন্ত—অনন্তশক্তি। তাঁহার স্বরূপ সাকল্যে নির্দ্দেশ করা সম্ভব নহে। কিন্তু তিনি একান্ত অনির্দ্দেশ্যও নহেন। তিনি শুক্র। শুক্র শব্দের অর্থ শুক্ল ; অর্থাৎ তিনি বিজ্ঞানানন্দস্বভাব স্বপ্রকাশস্বরূপ পদার্থ। দীপ যেরূপ নিজের প্রকাশে দীপান্তরের অপেক্ষা করে না, শ্রীভগবানও তদ্রূপ। তিনি স্বয়ং দীপ্তিমান পদার্থ। তিনি নিজেই নিজের প্রকাশক। তাঁহার প্রাকৃত স্থূলশরীর বা সূক্ষ্মশরীর নাই। তিনি পূর্ণ ; তিনি শুদ্ধ ; ধর্ম্মাধর্ম্মবিবর্জ্জিত। তিনি সর্ব্বজ্ঞ। তিনি কুশলী। তিনি মায়ার অধীশ্বর। তিনি স্বয়ং অকারণ হইয়াও সর্ব্ব-কারণ-কারণ। এই প্রত্যক্ষ পরিদৃশ্যমান বিশ্ব তাঁহারই রচিত। তিনিই নিজ কালশক্তি দ্বারা প্রকৃতিগুণের ক্ষোভোৎপাদন পূর্ব্বক তাহাদিগকে কাল সহকারে মহদাদির আকারে পরিণামিত করিয়া জগতের উৎপাদন করিয়াছেন, অথচ তিনি সম্পূর্ণ নির্লিপ্তভাবে অবস্থান করিতেছেন॥ ৮॥

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रताः॥ ९॥

**बलदेवः।** इदानीं पूर्व्वोक्तप्रकारेणानात्मविदः कर्म्मनिष्ठाः सन्तः केवलं कर्म्म कुर्व्वन्त एव ये जिजीविषन्ति तान् प्रति उच्यते अन्धं तम इति। षड़नुष्टुभः। अत्र विद्याविद्ययोः समुच्चिचीषया प्रत्येकं निन्दोच्यते। ये जना अविद्यां विद्याया अन्या अविद्या कर्म्म तां केवलामुपासते कुर्व्वन्ति स्वर्गार्थानि कर्म्माणि केवलं तत्पराः सन्तः अनुतिष्ठन्ति ते प्राणिनः अन्धमदर्शनात्मकं तमः अज्ञानं प्रविशन्ति संसारपरम्परामनुभवन्तीत्यर्थः। ततस्तस्मादन्धात्मकात् तमसः संसारात् भूय इव बहुतरमेव तमस्ते प्रविशन्ति ये उ ये पुनः विद्यायां केवलात्मज्ञाने एव रताः॥ ९॥

**विवृतिः।** इदानीमिति। तत इति। कर्म्म त्यक्त्वा विहितकर्म्माननुष्ठानेन प्रत्यवाये सत्यन्तःकरणशुद्ध्यभावेन ज्ञानानुदयादिति भावः॥ ९॥

**शङ्करः।**—अत्राद्येन मन्त्रेण सर्व्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता प्रथमवेदार्थः। ईशा वास्यमिदं सर्व्वं मा गृधः कस्यस्विद्धनमित्यज्ञानां जिजीविषूणां ज्ञाननिष्ठासम्भवे कुर्व्वन्नेवेह कर्म्माणि जिजीविषेदिति कर्म्मनिष्ठोक्ता द्वितीयो वेदार्थः। अनयोश्च निष्ठयोर्विभागो मन्त्रप्रदर्शितयोर्बृहदारण्यकेऽपि प्रदर्शितः। सोऽकामयत जाया मे स्यादित्यादिना। अज्ञस्य कामिनः कर्म्माणीति मन एवास्यात्मा वाग्जायेत्यादिवचनात्। अज्ञत्वं कामित्वं च निश्चितमवगम्यते। तथाच तत्फलं सप्तान्नसर्गस्तेष्वात्मभावेनात्मस्वरूपावस्थानं जायाद्येषणात्रयसन्न्यासेन चात्मविदां कर्म्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव दर्शिता। किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इत्यादिना। ये तु ज्ञाननिष्ठाः सन्न्यासिनस्तेभ्योऽसुर्य्या नाम त इत्यादिनाविद्वन्निन्दाद्वारेणात्मनो याथात्म्यं स पर्य्यगादित्येतदन्तैर्मन्त्रैरुपदिष्टम्। ते ह्यत्राधिकृतान् कामिन इति। तथाच श्वेताश्वतराणां मन्त्रोपनिषदि अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमित्यादि विभज्योक्तम्। ये तु कर्म्मनिष्ठाः कर्म्म कुर्व्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते। अन्धं तम इत्यादि। कथं पुनरेवमवगम्यते न तु सर्व्वेषामित्युच्यते। अकामिनः साध्यसाधनभेदोपमर्द्देन। यस्मिन् सर्व्वाणि भूतानि आत्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। यदात्मैकत्वविज्ञानं तन्न केनचित् कर्म्मणा ज्ञानान्तरेण वा ह्यमूढः समुच्चिचीषति। इह ग्रन्थे तु समुच्चिचीषयाविद्वदादिनिन्दा क्रियते। तत्र च यस्य येन समुच्चयः सम्भवति न्यायतः शास्त्रतो वा तदिहोच्यते। तद्दैवं वित्तं देवतादिज्ञानं कर्म्मसम्बन्धित्वेनोपन्यस्तं न परमात्मज्ञानम्। विद्यया देवलोक इति पृथक्फलश्रवणात्। तयोर्ज्ञान-

कर्म्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया न निन्दापरैवैकैकस्य पृथक्फलश्रवणात्। विद्यया तदारोहन्ति। विद्यया देवलोकः। न तत्र दक्षिणा यान्ति। कर्म्मणा पितृलोक इति। न हि शास्त्रविहितं किञ्चिदकर्त्तव्यतामियात्तव। अन्धं तमः अदर्शनात्मकं तमः प्रविशन्ति। के। येऽविद्यां विद्याया अन्या अविद्या तां कर्म्मेत्यर्थः। कर्म्मणो विद्याविरोधित्वात्। तामविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः। ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव तमः प्रविशन्ति। कर्म्म हित्वा ये उ विद्यायामेव देवताज्ञाने रताः। तत्रावान्तरफलभेदविद्याकर्म्मणोः समुच्चयकारणमाह। अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितया जामितैव स्यादित्यर्थः॥ ९॥

**आनन्दगिरिः।**—प्रकरणविभागं दिदर्शयिषुर्वृत्तमनुवदति। अत्राद्येनेति। यदुक्तं भास्करेण सर्व्वास्वप्युपनिषद्स्वेकब्रह्मविद्याप्रकरणं ततः प्रकरणभेदकरणमनुचितम्। तदसत्। प्राणाद्युपासनविधानस्याप्युपनिषत्सु दर्शनात्। न च तदपि ब्रह्मज्ञानाङ्गमिति वाच्यम्। पृथक्फलश्रवणात्। स्वेनापि व्याकृताव्याकृतोपासनसमुच्चयविधानस्य प्रकरणभेदेनैवेष्टत्वाद्व्याकृताव्याकृतोपासनस्य प्रकारान्तरत्वात्तस्माद्यथा कर्म्मकाण्डेऽग्निहोत्रादिप्रकरणं भिन्नमेवेष्यते भिन्नाधिकारत्वात्तत्तत्कर्म्मणस्तथोपनिषत्स्वपि भिन्नाधिकारकर्म्माविरोधाद्विरुद्धविद्याप्रकरणभेदो न विरुध्यते। मन्त्रार्थं ब्राह्मणसम्मतिं दर्शयितुमुपक्रमते। अनयोश्चेत्यादिना। तत्र वा कथमज्ञत्वमवगम्यत इत्याशङ्क्याह। मन एवेति। जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्व्वीयेति कामयमानस्य वाञ्छो जायादिर्यदा न सम्पद्यते तदाध्यात्मं जायादिसम्पत्तिं दर्शयति। मन इत्यादिना। एतच्चाज्ञत्वलिङ्गं मन-आदिष्वात्मत्वाद्यभिमानस्याज्ञानकर्म्मत्वात्। यथा वा बाह्यकामिन्यलाभे सुप्तः मनोविजृम्भितकामिनीमुपभुञ्जानोऽज्ञः प्रसिद्धस्तद्वदयमपीत्यर्थः। तेषाञ्च कर्म्मणां फलं संसारप्राप्तिरेवेत्यपि दर्शितमित्याह। तथाचेति। एकं साधारणमन्नं यदिदमद्यते द्वे देवानां हुतप्रहुते दर्शपौर्णमासौ वा चीर्णस्य भोगसाधनानि मनोवाक्प्राणलक्षणानि पश्वर्थमेकं पय इति सप्तान्नसर्गो दर्शितः। श्रुत्या यत् सप्तान्नानि मेधया तपसा जनयतीत्यादिना। अत्रैकैको यजमान एवं विहितप्रतिषिद्धज्ञानकर्म्मानुष्ठानात् सर्व्वस्य संसारस्य साक्षात्पारम्पर्य्याभ्यां जनकत्वात् पितोच्यते। सृष्टेष्वेतेषु तस्य पितुरहं ममेदमित्यात्मत्वाध्यासेन मन-आदिष्वितरेषु च सम्बन्धाध्यासेनावस्थानं संसारः प्रसिद्ध इत्यर्थः। एवं मन्त्रप्रदर्शिते निष्ठाद्वये ब्राह्मणसम्मतिं दर्शयित्वा प्रकरणविभागं दर्शयति। ये तु ज्ञाननिष्ठा इत्यादिना। अनाश्रमिभ्य इति उत्तमाश्रमिभ्य इत्यर्थः। साध्यसाधनभेदोप-

मर्द्देन यदात्मैकत्वविज्ञानं यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूदित्यवधारणेनोक्तं पूर्व्वार्द्धे मोक्ष-सार्द्धेन च संसारनिवृत्तिफलकमुक्तं तन्न केनचिदमूढ़ः समुच्चिचीषति। अन्धन्तम इत्यादौ तु समुच्चिचीषया विद्वदादिनिन्दा दृश्यते। ततः किमिति अत आह। तत्र च यस्येति। कस्य तर्हि ज्ञानस्य कर्म्मसमुच्चयः सम्भवतीत्यत आह। तद्दैवं वित्तमिति। तन्नोक्तं भास्करेण। ईशा वास्यमिति मन्त्रे ब्रह्मविद्यायाः प्रक्रान्तत्वात्तस्या एव समुच्चिचीषया निन्द्योच्यत इति। तदसत्। न हि प्रकृतमित्येतावता सम्बध्यते किन्तु सम्बन्ध-योग्यम्। शुद्धब्रह्मात्मैकत्वविद्यायास्त्वध्यासोपमर्द्दकत्वान्नास्ति कर्म्मसम्बन्धयोग्यता। किञ्च यस्मिन्निष्पन्नेऽपि फलस्य व्यवधानं सम्भाव्यते तस्यैव सहकारिसमुच्चय इष्यते। दर्शनादे-रिवेहैकत्वमनुपश्यतः को मोहः कः शोक इत्येकत्वदर्शनसमकालं मोहादिनिवृत्त्यभिधाना-न्न कालान्तरीयफलम्। ततो न सहकारिसमुच्चिचीषा। किञ्चास्या मन्त्रोपनिषदो ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादौ तृतीयाश्रुत्या यज्ञादेरिष्यमाणवेदनकरणत्वेन सम्बन्धः प्रतीयते। तत् कथं दुर्व्वलेन प्रकरणेन सहकारिसम्बन्धः कल्प्यते। प्रधानस्य च विद्यायाः सहकारिसम्बन्धविवित्सया निन्देत्यप्ययुक्तम्। अत एवाग्नीन्धनाद्यनपेक्षेतिसूत्रविरोधश्च समसमुच्चयश्च परेणापि नेष्यते। विरोधेन च परिजह्रे तस्मात् कर्म्माविरुद्धदेवताज्ञान-स्यैव समुच्चयो विधीयते। ननु देवताज्ञानस्य कर्म्मफलातिरिक्तफलाभावात् समुच्चयो न सम्भवतीत्यत आह। विद्ययेति। ननु समुच्चिचीषया निन्दति किमिति व्याख्या-स्यते अध्ययनविधेर्मोक्षादर्व्वाक् पर्य्यवसानानुपपत्तेर्देवलोकादिप्राप्तेः फलाभासत्वात् प्रहाणा-र्थैव निन्दा किं नेष्यते तत्राह। तयोर्ज्ञानकर्म्मणोरिति। फलशब्दो मोक्षे रूढ़ो मोक्ष-मनिच्छतामपि समीहिते फलव्यवहारदर्शनात्ततो यो देवलोकादिमुपादित्सते तस्य तदपि फलं भवत्येवेत्यर्थः ॥ ९ ॥

সিদ্ধান্তানুবাদ।—সম্প্রতি, যিনি আত্মার ঈদৃশ তত্ত্ব অবগত না হইয়া কেবল কর্ম্মনিষ্ঠ হয়েন, তাঁহার গতি বলিতেছেন,—

যাহারা ভক্তি-সম্পর্ক-বর্জ্জিত, কেবল স্বর্গাদিফলক কর্ম্মের অনুষ্ঠান করে, তাহারা অজ্ঞানাবৃত সংসারেই প্রবেশ করিয়া থাকে। আর যাহারা তদ্বর্জ্জিত অর্থাৎ কর্ম্মবিদ্বেষী হইয়া কেবল আত্মৈক্যজ্ঞানে রত হয়, তাহারা তদপেক্ষা গাঢ়-তমসাচ্ছন্ন অবস্থা প্রাপ্ত হয়॥ ৯॥

তাৎপর্য্য।—যাঁহারা পূর্ব্বোক্ত প্রকার আত্মতত্ত্ববিষয়ে অনভিজ্ঞ, এবং ভক্তিগন্ধশূন্য সকাম কর্ম্মই যাহাদের একমাত্র অবলম্বন, তাহারা তত্তৎ কর্ম্মের ফলস্বরূপ স্বর্গাদি লাভ করিলেও তাহাদিগের এই সংসারে পুনঃ পুনঃ গতায়াত অবশ্যম্ভাবী। ব্রহ্মলোকগত ব্যক্তিরই যখন পুনরাবর্ত্তন শ্রবণ করা যায়, তখন তদধোবর্ত্তী স্বর্গাদি লোক হইতে পতন যে অপরিহার্য্য, তাহা বলা বাহুল্যমাত্র। যাহাই হউক, এই কর্ম্মগতি বরং উৎকৃষ্ট, কিন্তু কর্ম্ম-বিদ্বেষী অদ্বৈতবাদীর ভক্তির অনঙ্গীভূত নির্ব্বেদব্রহ্মানুসন্ধানজ্ঞান আরও অপকৃষ্ট। কর্ম্মগতিতে প্রলয়কাল পর্য্যন্ত অপেক্ষা করিতে হয় না, তৎপূর্ব্বেই উন্নতির সম্ভাবনা পরিদৃষ্ট হইয়া থাকে। কিন্তু তাদৃশজ্ঞানগতিতে সে সম্ভাবনা নাই। জ্ঞানীর প্রাপ্য নির্ব্বিশেষ ব্রহ্ম। তৎপ্রাপ্তিতে চিত্তশুদ্ধির অপেক্ষা আছে। যিনি কর্ম্মদ্বেষী, তিনি বিহিত কর্ম্মেরও অনুষ্ঠান করেন না বলিয়া তাঁহার চিত্তশুদ্ধি ঘটে না, সুতরাং তাঁহার ব্রহ্মলাভ অসম্ভব। তবে যদি তিনি জ্ঞানোদয় পর্য্যন্ত চিত্তশুদ্ধিফলক কর্ম্ম স্বীকার করেন, তাহাতেও নিস্তার নাই। কারণ, মূলে কর্ম্ম-বিদ্বেষ-বাসনা থাকাতে তাঁহার ব্রহ্মনির্ব্বাণেও সুখোদয় হয় না। আবার ভক্তিবাসনা ভিন্ন ব্রহ্মনির্ব্বাণ স্থায়ীও হয় না। তৎপ্রাপ্তিতে ব্রহ্মনির্ব্বাণে অনুভবাভাবে আত্মার পাষাণ-কল্পত্ব ঘটে। ঐ অবস্থা প্রলয়ান্তস্থায়িনী। প্রলয়াবসানে ব্রহ্ম যখন পুনর্ব্বার সৃষ্ট্যুন্মুখ হয়েন, তখন ঐ সকল জীবের কামনাভাবের বাসনা হইতেই জীবসৃষ্টিতে প্রবৃত্ত হয়েন,] অর্থাৎ ঐ সকল জীবের উদ্ধারার্থ তদদৃষ্টানুসারে উহাদিগের পুনঃ সৃষ্টিতে প্রবৃত্ত হয়েন। সুতরাং তৎকালেই তাহাদিগের পুনরুন্নতির অবসর হয়। অতএব জীবের এই অবস্থা জ্ঞানাবস্থা বলিয়া প্রথিত হইলেও প্রকৃতপক্ষে উহাকে গাঢ়তর অজ্ঞানের অবস্থাই বলিতে হইবে। মায়োপাধিবর্জ্জিত ব্রহ্মে বিলয়প্রাপ্ত জ্ঞানীরই যখন এই দশা, তখন মায়োপাধি আত্মার ভাবে ভাবিত জ্ঞানীদিগেরত কথাই নাই। যাহারা আপনাকেই ঈশ্বর ভাবিয়া স্বাতিরিক্ত ঈশ্বরের অস্তিত্বে অবিশ্বাসী, তাহারাও যে তদ্রূপ গাঢ়তর তিমিরাবগুণ্ঠনে আচ্ছাদিত হয়, তাহাদিগকেও সেই সকল নাস্তিককেও—অসুরকেও যে পুনর্ব্বার এই ভীষণ সংসারে পুনঃ প্রবেশ করিতে হয়, তদ্বিষয়ে অণুমাত্র সংশয় নাই॥ ৯॥

**অন্যদেবাহুর্বিদ্যয়ান্যদাহুরবিদ্যয়া।
ইতি শুশ্রুম ধীরাণাং যে নস্তদ্বিচচক্ষিরে ॥ ১০ ॥**

**বলদেব:।**—জ্ঞানকর্ম্মণো: ফলভেদমাহ অন্যদেবেতি। বিদ্যয়া জ্ঞানেনান্যদেব ফলম্ আহু:। অবিদ্যয়া কর্ম্মণা সাধ্যমন্যদেব ফলমাহু:। যদ্বা বিদ্যয়াত্মজ্ঞানেনান্যদেব ফলমমৃতরূপমাহুর্ব্রহ্মবাদিন:। অবিদ্যয়া কর্ম্মণা চান্যদেব ফলং পিতৃলোকাদিরূপমাহুর্বিদ্বাংস:। কর্ম্মণা পিতৃলোকো বিদ্যয়া দেবলোকো দেবলোকো বৈ লোকানাং শ্রেষ্ঠস্তস্মাদ্বিদ্যাং প্রশংসন্তীত্যাদিশ্রুতে:। কথমেতদবগতমিত্যাহ ইতীতি। ইত্যেবং শুশ্রুম শ্রুতবন্তো বয়ং ধীরাণাং ধীমতাং বচনম্। যে আচার্য্যা নোঽস্মভ্যং তৎ কর্ম্ম চ জ্ঞানঞ্চ স্বরূপফলতো বিচচক্ষিরে ব্যাখ্যাতবন্তস্তেষামযমাগম: পারম্পর্য্যাগত ইতি ভাব: ॥ ১০ ॥

**বিবৃতি:।**—জ্ঞানকর্ম্মণোরিত্যাদি স্পষ্টম্ ॥ ১০ ॥

**শঙ্কর:।**—অন্যৎ পৃথগেব বিদ্যয়া ক্রিয়তে ফলমিত্যাহুর্বদন্তি। অন্যদাহুরবিদ্যয়া কর্ম্মণা ক্রিয়ত ইতি। তথোক্তং কর্ম্মণা পিতৃলোকো বিদ্যয়া দেবলোক ইতি। এবং শুশ্রুম: শ্রুতবন্তো বয়ং ধীরাণাং ধীমতাং বচনম্। যে আচার্য্যা নোঽস্মভ্যং তৎ কর্ম্ম চ জ্ঞানঞ্চ বিচচক্ষিরে ব্যাখ্যাতবন্তস্তেষামযমাগম: পারম্পর্য্যাগত ইত্যর্থ: ॥ ১০ ॥

**আনন্দগিরি:।**—অন্যদিতি চিত্তত্বা মায়া পরমেশ্বরস্যোপাধি:। মায়ান্তু প্রকৃতিং বিদ্যান্মায়িনন্তু মহেশ্বরমিত্যাদিশ্রুত্যন্তরপ্রসিদ্ধাচাসম্ভূতিশব্দেনোচ্যতে ন ব্রহ্ম। তস্য নির্বিকারস্য সাক্ষাৎ প্রকৃতিত্বত্বানুপপত্তে:। ভাস্করাভিমতস্তু পরিণামবাদস্তত্ত্বালোকে নিরস্ত এবাস্মাভি: সাংসারিকদু:খানুভবাভাবনে চ সুষুপ্তিবৎ প্রকৃতিলয়স্য পুরুষেণার্থ্যমানতাপ্যুপপদ্যতে। ফলঞ্চ কর্ম্মোপাসন ইব প্রকৃত্যুপাসনেঽপি পরমেশ্বর এব দাস্যতি। ততো জড়ত্বাৎ প্রকৃতে: ফলদত্বানুপপত্তেরুপাস্যত্বানুপপত্তিরিত্যপি ক্ষুচোদ্যমেব ॥ ১০ ॥ ১১ ॥ ১২ ॥ ১৩ ॥

**সিদ্ধান্তানুবাদ।**—এক্ষণে জ্ঞানফলের ও কর্ম্মফলের ভেদ প্রদর্শন করিতেছেন ;—

বিদ্যা অর্থাৎ আত্মৈক্যজ্ঞান বা প্রকারান্তরে নাস্তিক্যবুদ্ধির ফল একপ্রকার এবং অবিদ্যা অর্থাৎ কর্ম্মের ফল অন্যপ্রকার। যে সকল আচার্য্য আমাদিগকে কর্ম্ম ও জ্ঞানের

স্বরূপ এবং ফল উপদেশ করেন, তাঁহাদিগের নিকট এই-রূপই শ্রবণ করা যায়॥ ১০॥

তাৎপর্য্য।—ভক্তিশূন্য কাম্যকর্ম্মের ফল ক্ষণবিধ্বংসী স্বর্গাদি লোক, এবং তদ্রহিত নির্ভেদব্রহ্মানুসন্ধানাত্মক জ্ঞানের বা নাস্তিকতার ফল পরিশেষে ব্রহ্মনির্ব্বাণ। অদ্বয়ব্রহ্মজ্ঞানীও নির্ব্বাণ প্রাপ্ত হয়েন; এবং নাস্তিকভাবাপন্ন আত্মেশ্বরতাবাদী অসুরগণও নির্ব্বাণ লাভ করেন। তন্মধ্যে প্রথমোক্তের নরকাদিতে পতন নাই; কিন্তু শেষোক্তের তাহাও ঘটে। এই স্থলে বিদ্যা-শব্দে বিদ্যাভিধেয় অদ্বয় জ্ঞানই উক্ত হইয়াছে। বিদ্যাশব্দে ভগবত্তত্ত্বজ্ঞানও বোধিত হয়। কিন্তু ঐ অর্থে পূর্ব্বমন্ত্রের সঙ্গতি করা যায় না। কারণ, পূর্ব্ব-মন্ত্রে বিদ্যানিষ্ঠ ব্যক্তির কর্ম্মীর প্রাপ্য অজ্ঞানান্ধকারাবৃত স্থান হইতে অপকৃষ্ট স্থান প্রাপ্য বলিয়া নির্দ্দেশ করিতেছেন। তবে বিদ্যাশব্দের তাদৃশ অপব্যব-হারে অসহিষ্ণু হইয়া মঙ্গলময়ী শ্রুতি সুকৌশলে জীবের পরমপুরুষার্থসম্পা-দনী বিদ্যার প্রশংসাও না করিয়াছেন, এমন নহে। এই পক্ষে বিদ্যাশব্দের অর্থ হ্লাদিনীসারসমবেত সম্বিদ্রূপা ভক্তিদেবী। ভক্তির ফল অবিদ্যার ফল হইতে সম্পূর্ণ বিভিন্ন। অবিদ্যামূলক কর্ম্ম ও জ্ঞান পরমাত্মসাযুজ্য ও ব্রহ্ম-নির্ব্বাণ পর্য্যন্ত প্রদান করিতে পারে, কিন্তু অমৃতত্ব বা ভগবৎপ্রেমরূপ পরম-মোক্ষ—পরমপুরুষার্থ প্রদান করিতে পারে না। বিদ্যা অর্থাৎ ভক্তিই এক-মাত্র তাহা প্রদান করিতে পারেন, ইহাই প্রকৃত তত্ত্বজ্ঞের উপদেশ॥ ১০॥

**विद्यां चाविद्याञ्च यस्तद्वेदोभयं सह।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥ ११॥**

**बलदेवः।**—समुच्चयमाह विद्यामिति। विद्याञ्च ज्ञानञ्च अविद्याञ्च कर्म्म च यत् तदेतदुभयं सह एकेन पुरुषेणानुष्ठेयं यो वेद जानाति। यद्वा विद्यात्मज्ञानमविद्या तत्साधनभूतं कर्म्म चद्वयं परस्परसमुच्चयार्थं तदुभयं सह पुरुषार्थहेतुत्वेन यो वेद एकेनैव पुरुषेणानुष्ठेयमिति जानाति सः अविद्यया ईश्वरार्पणबुद्ध्या कृतानामग्निहोत्रादि-कर्म्मणां मृत्युं मारकम् अन्तःकरणमलं तीर्त्वा अन्तःशुद्ध्या कृतकृत्यो भूत्वा विद्ययात्म-ज्ञानेनामृतममृतत्वं मोक्षमश्नुते प्राप्नोति॥ ११॥

**विवृतिः।**—समुच्चयमाहेति। अमृतमिति भावप्रधानो निर्देशः। एवमेवोक्तं श्रीभगवता। यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यतीति। सांख्ययोगशब्दौ ज्ञानकर्मपरौ ॥ ११ ॥

**शाङ्करः।**—यत एवं विद्याञ्चाविद्याञ्च देवताज्ञानं कर्म चेत्यर्थः। यस्तदेतदुभयं सहैकेन पुरुषेणानुष्ठेयं वेद तस्येदं समुच्चयकारिण एकपुरुषार्थसम्बन्धः क्रमेण स्यादित्युच्यते। अविद्यया कर्मणाग्निहोत्रादिना मृत्युं स्वाभाविकं कर्म ज्ञानञ्च मृत्युशब्दवाच्यमुभयं तीर्त्वा अतिक्रम्य विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोतीति। तद्ध्यमृतमुच्यते यद्देवतात्मभावम् ॥ ११ ॥

**সিদ্ধান্তানুবাদ।**—অনন্তর বিদ্যা ও অবিদ্যার সমুচ্চয়ের ফল বর্ণন করিতেছেন ;—

যিনি কর্ম্ম ও জ্ঞানকে যুগপৎ একই ব্যক্তির অনুষ্ঠেয় বলিয়া অবগত হয়েন, তিনি উক্ত কর্ম্ম দ্বারা চিত্তশুদ্ধিতে বিনাশকর অজ্ঞানময় সংসার হইতে উত্তীর্ণ হইয়া জ্ঞান দ্বারা অমৃতত্ব লাভ করেন ॥ ১১ ॥

**তাৎপর্য্য।**—পূর্ব্বোক্ত মন্ত্রদ্বয়ে জ্ঞান ও কর্ম্মের নিন্দা করিয়াছেন। জ্ঞান ও কর্ম্মের ভেদদৃষ্টিতেই ঐ নিন্দার ভাজন হইতে হয়। অর্থাৎ যে পুরুষ, জ্ঞানকে অস্বতন্ত্র বিবেচনা করিয়া উহাকে কর্ম্মের শেষ কর্ম্মের ফল ভাবিয়া কর্ম্মকেই একমাত্র পুরুষার্থের সাধন মনে করিয়া কেবল তদনুষ্ঠানে নিরত হয়, তাহার তাদৃশ কর্ম্মের সকামত্ব ভক্ত্যনঙ্গীভূতত্ব প্রযুক্ত তদনুষ্ঠিত উক্ত কর্ম্ম তাহাকে ক্ষণবিধ্বংসী স্বর্গাদি প্রদান করিলেও নিত্য মোক্ষফল বা ভগবৎ-প্রেমরূপ পরমপুরুষার্থ প্রদান করিতে পারে না। কারণ, উক্ত কর্ম্মের মূলে জ্ঞানকামনারূপ দৃঢ়তর ফলকামনা বিদ্যমান থাকাতে উহা চিত্তের স্থৈর্য্য সম্পাদন করিতে পারে না। তাদৃশ কর্ম্মীর প্রকৃত জ্ঞানের ধারণা না থাকাতে তাহার চিত্ত সদাই বিক্ষিপ্ত হয়। তাহার চিত্তে শান্তির পরিবর্ত্তে উত্তরোত্তর অশান্তিরই বৃদ্ধি হইতে থাকে। অশান্ত চিত্তে প্রেম কখনই স্থান পাইতে পারে না। শুষ্ক বৈরাগ্যের রসশোষকত্ব ত প্রসিদ্ধই আছে। জ্ঞানীর সম্বন্ধেও ঐরূপই বলা যাইতে পারে। জ্ঞানীর জ্ঞানের মূলে কর্ম্মবিদ্বেষ

অপরিহার্য্য। যেখানে বিদ্বেষভাব, সেখানে প্রেমের হানি অবশ্যম্ভাবিনী। এই কারণেই তত্ত্বজ্ঞগণ বলিয়া থাকেন, "কর্ম্ম বিক্ষেপকং তস্যা বৈরাগ্যং রসশোষকম্। জ্ঞানং হানিকরং তত্তচ্ছোধিতং স্বনুযাতি তাম্॥" কিন্তু যে সকল ধীর ব্যক্তি জ্ঞান ও কর্ম্মের ভেদ দর্শন করেন না, যাঁহারা তদুভয়ের কোনটিরই বিদ্বেষী নহেন, তাঁহাদিগকে পূর্ব্বোক্ত নিন্দার পাত্র হইতে হয় না। তাঁহাদিগের কর্ম্মও তাঁহাদিগের বন্ধনের বা পতনের কারণ হয় না। অথবা তাঁহাদিগের জ্ঞানও তাঁহাদিগের হানিজনক হইতে পারে না। পরন্তু তাঁহাদিগের ভক্ত্যঙ্গীভূত কর্ম্ম ও জ্ঞান তাঁহাদিগের চিত্তশুদ্ধি ও স্বপরাত্ম-বোধ উৎপাদন করিয়া পরিশেষে ভগবৎপ্রেমরূপ পরমপুরুষার্থ প্রদান পূর্ব্বক তাঁহাদিগকে অমৃতময় করেন। তাঁহাদিগের কর্ম্ম ও জ্ঞান স্বার্থমূলক নহে। যাহা স্বার্থমূলক নহে, তাহাই বিশুদ্ধ। যাহা বিশুদ্ধ, তাহাই বিশুদ্ধি জন্মাইতে সমর্থ। পক্ষান্তরে কর্ম্মীর ও জ্ঞানীর কর্ম্ম এবং জ্ঞান সম্পূর্ণ স্বার্থযুক্ত। যাহা স্বার্থযুক্ত, তাহার ফলও অবশ্য তদ্রূপ অকিঞ্চিৎকরই হইবে। অতএব বুদ্ধিমান ব্যক্তির পক্ষে জ্ঞানকর্ম্মের ঐক্যই বিভাবনীয়। ভক্তিতেই কর্ম্ম ও জ্ঞানের সমন্বয় দেখা যায়। ভগবদ্ভজনাত্মক কর্ম্ম এবং তৎস্মরণাদ্যাত্মক জ্ঞান পরস্পর বিরোধী নহে। অতএব তাদৃশ অবিরুদ্ধ জ্ঞানকর্ম্মাত্মক সাধনভক্তি যে সাধ্যভক্তিরূপ ভগবৎপ্রেমফল প্রসব করিবে, তাহাতে আর বিচিত্র কি? ভগবৎপরিচর্য্যাত্মক কর্ম্মক্ষেত্রে উপ্ত ভজনীয়স্বানুসন্ধানাত্মক জ্ঞানবীর্য্য ভাবাঙ্কুর উৎপাদন পূর্ব্বক যথাকালে প্রেমফল বিকাশিত করিয়া দেয়, ইহাই স্থির সিদ্ধান্ত জানিতে হইবে॥ ১১ ॥

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते।**
**ततो भूय इव ते तमो य उ सम्भूत्यां रताः॥ १२**

**वलदेवः।**—अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्द्यते। ये असम्भूतिं सम्भवनं सम्भूतिः कार्य्यस्योत्पत्तिरुत्पत्तिविशिष्टा वा तस्या अन्या असम्भूतिः प्रकृतिः कारणं ताम् अव्याकृताख्याम् अविद्याकामकर्म्मवीजभूतामदर्शनात्मिकाम् उपासते ते तदनुरूपमेवान्धं तमः प्रविशन्ति संसारमेव प्राप्नुवन्ति। ये तु सम्भूत्यां कार्य्यब्रह्मणि हिरण्यगर्भादौ उ एव रतास्ते ततस्तस्मादपि भूयः वहुतरमिव एव तमः प्रविशन्ति॥ १२॥

**বিবৃতিঃ।**—অধুনেতি। স্ফুটার্থো গ্রন্থঃ। যদ্বা উক্তমেব উত্তরগ্রন্থত্রয়েণ সমর্থ্যতে অন্ধং তম ইতি। যে অবিদ্যামুপাসতে তে অন্ধং তমঃ প্রবিশন্তীত্যুক্তম্। তত্রা-বিদ্যাস্বরূপমুচ্যতে অসম্ভূতিমিতি। যে প্রাণিনঃ অসম্ভূতিং নাস্তি সম্ভূতির্জগত উৎ-পত্ত্যাদির্যস্মাৎ সোঽসংভূতিস্তং সংভূতেরুপলক্ষণত্বাৎ পরমেশ্বরো ন জগদুৎপত্ত্যাদিকর্ত্তা অপি তু স্বভাবত এবোৎপদ্যতে অবতিষ্ঠতি নশ্যতীত্যাত্মানমুপাসতে তে অন্ধং তমঃ প্রবি-শন্তীত্যর্থঃ। যতো বা ইমানীত্যাদিশ্রুতিবিরুদ্ধত্বাৎ। অসত্যমপ্রতিষ্ঠং তে জগদাহু-রনীশ্বরম্। অপরস্পরসংভূতং কিমন্যৎ কামহৈতুকম্। এতাং দৃষ্টিমবষ্টভ্য নষ্টাত্মানো-ঽল্পবুদ্ধয়ঃ। প্রভবন্ত্যুগ্রকর্ম্মাণঃ ক্ষয়ায় জগতোঽহিতাঃ। আসুরীং যোনিমাপন্না মূঢ়া জন্মনি জন্মনি। মামপ্রাপ্যৈব কৌন্তেয় ততো যান্ত্যধমাং গতিমিতি ভগবদুক্তেশ্চ। অন্যৎ পূর্ব্ববৎ। যদ্বা যথানিয়মাদিসম্বন্ধবান্ বিজ্ঞানাত্মা কশ্চিন্নাস্তি জল-বুদ্‌বুদবজ্জীবাঃ মদশক্তিবদ্বিজ্ঞানম্ ইত্যাদি দুর্ব্বাদিনো বৌদ্ধা অনেন নিন্দ্যন্তে। যে নরা অসংভূতিং ন সংভূতিরসংভূতিস্তাং মৃতস্য পুনঃ সংভবো নাস্তি অতঃ শরীরান্তে অস্মাকং মুক্তিরেবেতি যে উপাসতে সিদ্ধান্তয়ন্তি তে অন্ধং তমঃ প্রবিশন্তি তথা যে বৈ যে চ সংভূত্যা-মেব রজঃ সম্ভবত্যস্যা ইতি সম্ভূতিঃ পরদেবতা তস্যৈবাসক্তাঃ কর্ম্মপরাঙ্মুখাঃ স্ববুদ্ধি-মালিন্যমজানানা আত্মজ্ঞানমাত্র এব রতাঃ আত্মৈবাস্তি নান্যৎ কর্ম্মান্যদিতি কর্ম্ম-কাণ্ডজ্ঞানকাণ্ডয়োঃ সম্বন্ধো নাস্তীত্যভিপ্রায়বন্ত ইত্যর্থঃ তে নরাস্ততোঽন্ধাৎ তমসো ভূয় ইব ইবশব্দো নিপাতো বহ্বর্থঃ বহুতরং তমো বিশন্তি ॥ ১২ ॥

**শঙ্করঃ।**—অধুনা ব্যাকৃতাব্যাকৃতোপাসনয়োঃ সমুচ্চিচীষয়া প্রত্যেকং নিন্দোচ্যতে। অন্ধন্তমঃ প্রবিশন্তি যে অসংভূতিং সম্ভবনং সম্ভূতিঃ সা যস্য কার্য্যস্য সা সম্ভূতিঃ তস্যান্যা অসংভূতিঃ প্রকৃতিঃ কারণমব্যাকৃতাখ্যং তামসংভূতিমবিদ্যাং কামকর্ম্মবীজভূতামদর্শনা-ত্মিকামুপাসতে যে তে তদনুরূপমেবান্ধং তমোঽদর্শনাত্মকং প্রবিশন্তি। ততস্তস্মাদপি ভূয়ো বহুতরং তমঃ প্রবিশন্তি যে সংভূত্যাং কার্য্যব্রহ্মণি হিরণ্যগর্ভাখ্যে রতাঃ ॥ ১২ ॥

সিদ্ধান্তানুবাদ।—এইরূপে জ্ঞানকর্ম্মের ভেদদর্শনের নিন্দা করিয়া, পরে শ্রীভগবানের ভিন্ন ভিন্ন শক্তির বা রূপের ভেদদৃষ্টিতে উপাসনার নিন্দা করিতেছেন ;—

যে ব্যক্তি পৃথক্‌ভাবে এই বিশ্বের উপাদানরূপা প্রকৃতি-শক্তির উপাসনা করে, সে অন্তে ঘোরতমসাবৃত অব্যক্তেই প্রবেশ করে, আর যে ব্যক্তি প্রকৃতিগুণে গুণবান হিরণ্য-

গর্ভাদিকে স্বতন্ত্রভাবে উপাসনা করে, সে অধিকতর অজ্ঞান-গর্ভে নিমগ্ন হয় ॥ ১২ ॥

তাৎপর্য্য।—যে সকল মূঢ় ব্যক্তি প্রকৃতির অতীত পুরুষের অস্তিত্বে অবিশ্বাসী হইয়া কেবল জড়ের উপাসনাতেই নিবিষ্ট হয়, জড়ত্বই তাহাদিগের চরম ফল। তাহাদিগের আত্মা জড়ভাব প্রাপ্ত হইয়া অজ্ঞানাবৃত হইয়া ঘোর নরকযন্ত্রণা ভোগ করিতে থাকে। আবার যাহারা পরব্রহ্মের কার্য্যভূত প্রকৃতিগুণে গুণবান হিরণ্যগর্ভাদিকে—আধিকারিক দেবতা সকলকে স্বতন্ত্র কর্ত্তা বিবেচনা করিয়া তাঁহাদিগেরই উপাসনাতে রত হয়, তাহাদিগের পূর্ব্বাপেক্ষা অধিকতর দুর্গতি ঘটে। কি প্রকৃতিকে কি হিরণ্যগর্ভাদি দেবতা সকলকে পরব্রহ্মেরই শক্তি বা অংশ বিবেচনায় পূজা করিলে, যদিও অনন্যভক্তির হানি হয় বটে, কিন্তু তাহাতেও তাদৃশী ক্ষতির সম্ভাবনা নাই। উহাঁদিগকে পরমেশ্বরেরই শক্তি বা অংশ জানিয়া ভগবদ্ভক্তির পরিবর্দ্ধনার্থ উহাঁদিগের সম্মাননায় কিছুমাত্র ক্ষতি হয় না; কিন্তু উহাঁদিগের স্বাতন্ত্র্যজ্ঞানেই পতন ঘটে। অতএব তদ্বিষয়ে বিশেষ সাবধান থাকাই বুদ্ধিমানের কর্ত্তব্য ॥ ১২ ॥

**अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।**

**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥**

**वलदेवः ।**—अथोभयोरुपासनयोः समुच्चयकारणमवयवतः फलभेदमाह अन्यदेवेति। सम्भवात् संभूतेः कार्य्यब्रह्मोपासनादन्यदेव पृथगेव अन्धतरतमःप्रवेशलक्षणं फलमाहुः कथयन्ति धीराः। तथा सम्भवादसम्भूतेरव्याकृतोपासनादन्यदेव फलमुक्तमन्धं तमःप्रविशन्तीत्याहुः। इत्येवंविधं धीराणां धीमतां वचः शुश्रुम वयं श्रुतवन्तः। ये धीराः नोऽस्माकं तत् पूर्व्वं सम्भूत्यसम्भूत्युपासनफलं विचचक्षिरे व्याख्यातवन्तः ॥१३॥

**विवृतिः ।**—अथोभयोरिति। स्फुटार्थमेतत् ॥ १३ ॥

**शाङ्करः ।**—अधुनोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह। अन्यदेव पृथगेवाहुः फलं सम्भवात् सम्भूतेः कार्य्यब्रह्मोपासनादणिमाद्यैश्वर्य्यलक्षणमाख्यातवन्त इत्यर्थः। तथा चान्यदाहुरसम्भवादसम्भूतेरव्याकृतादव्याकृतोपासनाद्यदुक्तमन्धन्तमः प्रविशन्तीति प्रकृतिलय इति च पौराणिकैरुच्यते इति एवं शुश्रुम धीराणां ये नस्तद्विचचक्षिरे व्याकृताव्याकृतोपासनफलं व्याख्यातवन्त इत्यर्थः ॥ १३ ॥

সিদ্ধান্তানুবাদ।—পরমেশ্বরের শক্তির উপাসনা ও হিরণ্যগর্ভাদির উপাসনা, উভয়ের ফল ভিন্ন ভিন্ন, পণ্ডিতগণ এইরূপই বলিয়া থাকেন। আমরা এইরূপই তাঁহাদিগের নিকট শ্রবণ করিয়া থাকি ॥ ১৩ ॥

তাৎপর্য্য।—পরমেশ্বরের শক্তিভূতা প্রকৃতির উপাসনার ফল অন্যরূপ এবং কার্য্যব্রহ্ম হিরণ্যগর্ভাদির উপাসনার ফল অন্যরূপ, ইহাই পণ্ডিতগণের উপদেশ। পদার্থভেদই এই ফলভেদের কারণ। প্রকৃতি জড়শক্তি; হিরণ্যগর্ভাদি পুরুষের অংশ। জড়শক্তির উপাসনার ফল এবং চিচ্ছক্তির উপাসনার ফল অবশ্যই পৃথক্ হইবে। অজ্ঞান ব্যক্তিই তদুভয়ের ঐক্য বিবেচনা করেন, কিন্তু তত্ত্বজ্ঞ ব্যক্তি সেরূপ বিবেচনা করিতে পারেন না। অতএব তদুভয়ের পার্থক্য অবগত হইয়া ইতিকর্ত্তব্য স্থির করিতে হয়, ইহাই সুধীগণের অভিপ্রায় ॥ ১৩ ॥

**सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥ १४ ॥**

**वलदेवः।**—यतः एवमतः समुच्चयः सम्भूत्यसम्भूत्युपासनयोर्युक्त एवैकपुरुषार्थत्वाच्चेत्याह सम्भूतिञ्चेति। सम्भूतिम् असम्भूतिं प्रकृतिञ्च अकारलोपश्छान्दसः विनाशं विनश्वरं हिरण्यगर्भञ्च यः तत् वेद उभयं सह विनाशी धर्म्मो यस्य कार्य्यस्य तेन धर्म्मिणाभेदेनोच्यते विनाश इति विनाशेन हिरण्यगर्भोपासनेन मृत्युमनैश्वर्य्यादि तीर्त्वा अतीत्य असम्भूत्या अव्याकृतोपासनेनामृतम् आपेक्षिकं प्रकृतिलयलक्षणमश्नुते समुच्चयोपासनायान्तु अणिमाद्यैश्वर्य्यलक्षणं शुभफलं भावीतिबोध्यम् ॥ १४ ॥

**विवृतिः।**—यत इति विशदार्थम्। यद्वा उक्तं सर्व्वमुपसंहरति सम्भूतिञ्चेति। सम्भूतिं सकलजगत्सम्भवैकहेतुं परब्रह्म विनाशं विनाशोऽस्यास्तीति विनाशम् अर्श-आदिभ्यो अच् प्रत्ययः विनाशधर्म्मकं शरीरिशरीररूपं यो योगी सह एकीभूतं वेद जानाति नित्यानित्यं वस्तु विविचयतीत्यर्थः। देहभिन्नोऽहं देहीवासं कर्म्म निमित्तमिति ज्ञात्वा शरीरेण ज्ञानोत्पत्तिकराणि निष्कामकर्म्माणि कृत्वेश्वरे अर्पयतीति भावः स ज्ञानी विनाशेन विनाशवता शरीरेण सात्त्विककर्म्मानुष्ठानद्वारा मृत्युं तीर्त्वान्तःकरणशुद्धिं सम्पाद्य सम्भूत्यात्मज्ञानेनामृतत्वमश्नुते मुक्तिं प्राप्नोतीति। यद्वा सम्भूतिं विना-

शस्य व्याकृताव्याकृतोपासनद्वयं यः सह वेद उभयमुपास्ते इत्यर्थः स योगी अविनाशेनाव्या-
कृतोपासनेन मृत्युमनैश्वर्य्यमधर्म्मकामादिदोषजातञ्च तीर्त्त्वातिक्रम्य सम्भूत्या हिरण्यगर्भो-
पासनेनामृतं प्रकृतिलयलक्षणमश्नुते प्राप्नोति। अत्र विनाशं विनाशेनेति शब्दद्वये
अवर्णलोपो द्रष्टव्यः पृषोदरादित्वात् साधुः अन्यदाहुरसम्भवादिति प्रकरणात्। यद्वा
सम्भूत्या सम्भवतीति सम्भूतिर्हिरण्यगर्भादिर्देवता तया सम्भूत्युपासनया मृत्युमन्तःकरण-
मलादिरूपं तीर्त्त्वातिक्रम्य अविनाशेन विनाश उपलक्षणम् उत्पत्तिविनाशादिदोषरहितेन
परमात्मना तज्ज्ञानेनामृतं मोक्षमश्नुते इति भिन्नक्रमेण पदयोर्व्याख्यानम् ॥१४॥

**शङ्करः।**—यत एवमतः समुच्चयः सम्भूत्यसम्भूत्युपासनयोर्युक्त एकपुरुषार्थ-
त्वाच्चेत्याह। सम्भूतिं च विनाशञ्च यस्तद्वेदोभयं स विनाशी धर्म्मो यस्य कार्य्यस्य
तेन धर्म्मिणाभेदेनोच्यते विनाश इति तेन तदुपासनेनानैश्वर्य्यमधर्म्मकामादिदोष-
जातञ्च मृत्युं तीर्त्त्वा हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्तिः फलम्। तेनानैश्वर्यादि-
मृत्युमतीत्यासम्भूत्या अव्याकृतोपासनया अमृतं प्रकृतिलयलक्षणमश्नुते। सम्भूतिञ्च
विनाशञ्चेत्यत्रावर्णलोपेन विनिर्द्देशो द्रष्टव्यः। प्रकृतिलयफलं श्रुत्यनुरोधात्। मानुष-
दैववित्तसाध्यं फलं शास्त्रलक्षणं प्रकृतिलयान्तम्। एतावती संसारगतिः। अतःपरं
पूर्व्वोक्तमात्मैवाभूद्विजानत इति सर्व्वात्मभावसर्वैषणान्यासज्ञाननिष्ठाफलम् एवं द्विप्रकारः
प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽत्र प्रकाशितः। तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेध-
लक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणमुपयुक्तम्। निवृत्तिलक्षणस्य प्रकाशनेऽत
ऊर्द्धं बृहदारण्यकं तत्र निषेकादिश्मशानान्तं कर्म्म कुर्व्वन् जिजीविषेत् यो विद्यया सहा-
परब्रह्मविषयया। तदुक्तं विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह इति ॥ १४ ॥

**आनन्दगिरिः।**—विस्तरेणोक्तमर्थज्ञानं सङ्क्षिप्योपसंहरति। मानुषदैव-
वित्तसाध्यमित्यादिना। शरीरपाटवं गोभूहिरण्यादिसाधनसम्पत्तिश्च मानुषं वित्तम्।
दैवं वित्तं देवताज्ञानम्। उत्तरग्रन्थस्य सम्बन्धाभिधित्सया अर्थं विशेषमनुवदति। तत्र
निषेकादीति। तदुक्तमिति प्रत्यक्तमन्त्रेण। विद्याञ्चेत्यापेक्षिकामृतत्वं फलमित्युक्त-
मस्माभिरिति योजना ॥ १४ ॥ १५ ॥

সিদ্ধান্তানুবাদ।—অতএব অসম্ভূতির ও সম্ভূতির উপাসনার সমু-
চ্চয়ই বলিতেছেন ;—

পরমেশ্বরের শক্তিভূতা প্রকৃতির উপাসনা এবং তদংশ-
ভূত হিরণ্যগর্ভাদির উপাসনা, এই উভয়ই এক ব্যক্তির
অনুষ্ঠেয় জানিয়া, যে ব্যক্তি তদুভয়ের অনুষ্ঠান করে, সে

হিরণ্যগর্ভাদির উপাসনা দ্বারা অনৈশ্বর্য্য হইতে উত্তীর্ণ হইয়া প্রকৃতির উপাসনা দ্বারা প্রকৃতিলয়লক্ষণ আপেক্ষিক অমৃতত্ব প্রাপ্ত হয়॥ ১৪॥

তাৎপর্য্য।—প্রকৃতিকে ও হিরণ্যগর্ভাদিকে পরমেশ্বর হইতে স্বতন্ত্র জানিয়া যে ব্যক্তি উভয় উপাসনার সমুচ্চয়কেই কর্ত্তব্য ভাবিয়া তদুভয়ের উপাসনাতে রত হয়, তাহার অপেক্ষাকৃত সুগতি হইলেও ঈদৃশ উপাসনা হইতে সদ্যোমুক্তিরূপ কিঞ্চিৎ অধিক ফল লাভ হইলেও প্রকৃতিলয়লক্ষণ দুর্গতির ব্যভিচার নাই। অতএব ঈদৃশ সমুচ্চয়কেও বিধিবোধিত বলিয়া স্বীকার করা যায় না। তবে প্রকৃতিকে পরমেশ্বরের শক্তি ও হিরণ্যগর্ভাদিকে তাঁহারই অংশ বা শক্তি ভাবিয়া পূজা করিলে অণিমাদি ঐশ্বর্য্যের লাভ ও পরমাত্মসাযুজ্য-প্রাপ্তি হইয়া থাকে। কিন্তু ইহাকেও জীবের চরম ফল পরমপুরুষার্থ বলা যায় না। কারণ, প্রকৃত পরমপুরুষার্থ উহা হইতে বহুদূরবর্ত্তী। তাহাতে তদুভয়ের সমুচ্চয় বা দুইটির কোনটিই স্বীকৃত হয় না। তবে পরমেশ্বর হইতে অস্বতন্ত্রবোধে তদুভয়ের সমুচ্চয়োপাসনাতে অর্থাৎ ভক্তির অবিরোধিভাবে উহাঁদিগের উপাসনাতে পরমাত্মসাযুজ্যাদি লাভের পরও ক্রমমুক্তি ঘটে। ইহাই একান্ত প্রার্থনীয় না হইলেও নিতান্ত হেয় নহে। যেহেতু ক্রমমুক্তিতে পরিশেষে ভগবৎ-প্রেম-প্রাপ্তির সম্ভাবনা আছে। নির্ব্বিশেষ-ব্রহ্মসাযুজ্য, প্রকৃতিসাযুজ্য ও পুরুষসাযুজ্য এই তিনটিই মুক্তি বটে, কিন্তু শান্তাদি ভক্তি হইতে ইহারা সকলেই নিকৃষ্ট। নির্ব্বিশেষ-ব্রহ্ম-সাযুজ্য-প্রাপ্ত ও প্রকৃতি-সাযুজ্য-প্রাপ্ত জ্ঞানীর ও নাস্তিকের ভক্তিবাসনার অভাবে পুনর্জ্জন্ম ঘটে, কিন্তু পুরুষসাযুজ্যপ্রাপ্ত জীবের উপাসনায় মূলে শক্তিস্ফূর্ত্তির নিশ্চয়তা বশত ভক্তিবাসনা অপরিহার্য্য। যে উপাসকের উপাসনার মূলে ভক্তিবাসনা বিদ্যমান থাকে, তাঁহার পুনর্জ্জন্ম ঘটিতে পারে না। অতএব এই ত্রিবিধ উপাসকের মধ্যে শেষোক্ত উপাসক অপেক্ষাকৃত শ্রেষ্ঠ। সকাম প্রকৃতির উপাসনারূপ নাস্তিকতায় প্রকৃতিসাযুজ্য, কামনাবিদ্বেষসমন্বিত পরমাত্মচিন্তনে পুরুষসাযুজ্য প্রাপ্তি হইয়া থাকে। কিন্তু এই উপাসকত্রয়ের উপাসনার মূলে যদি কিঞ্চিন্মাত্রও ভক্তিবাসনা থাকে, তবে ইহাঁরা তত্তৎসাযুজ্যভাব প্রাপ্তির পর ক্রমমুক্ত হয়েন। ঐ সময়ে তাঁহাদিগের আত্মগত ভক্তি-

বাসনা পল্লবিত হইয়া স্ফুরিত হইয়া তাঁহাদিগকে ভগবৎপ্রেমপ্রবণ করিয়া তুলে। অতএব তাঁহারা তদবস্থায় তত্তৎসাযুজ্যাবস্থার মুগ্ধ না থাকিয়া অন্তরে শ্রীভগবানের চিন্তা করিতে থাকেন। ঐ চিন্তাই, তাঁহাদিগের উত্তরোত্তর উন্নতির সাহায্য করিতে থাকে। উহা প্রাপ্তসাযুজ্যাবস্থায় স্থির থাকিতে না দিয়া ভগবৎপ্রেমলাভের নিমিত্ত আকুলিত করিতে থাকে। ঐ আকুলতাই ঐ আগ্রহই পরিশেষে তাঁহাদিগের পরমপুরুষার্থ লাভের উপায় হয়। তাঁহারা ক্রমে শান্তাদিভাব প্রাপ্তিতে ঐশ্বর্য্যসেবী বা মাধুর্য্যসেবী ভক্তমধ্যে পরিগণিত হইয়া শ্রীভগবানের সহিত নিত্যানন্দে বিহার করিতে থাকেন। ইহাই জীবের পরমপুরুষার্থ। এই অবস্থার লাভার্থই জীবের জন্ম। যতদিন পর্য্যন্ত এই অবস্থার লাভ না হয়, ততদিন পর্য্যন্ত জীব স্থির থাকিতে পারেন না। সাযুজ্যাদি অবস্থাও জীবের চিরস্থায়ী নহে; উহা দুরন্ত সংসারাশ্রমের ক্ষণিক বিশ্রামস্থলমাত্র। উহা যদি চিরস্থায়ী হয়, তবে পরমপুরুষার্থ শব্দ ও তদ্বোধক শাস্ত্র সকল নিরর্থক হইয়া পড়ে। সাযুজ্যাদিকে পরমপুরুষার্থ বিবেচনা করা, নিজের সঙ্কীর্ণতার পরিচয় মাত্র॥ ১৪॥

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**तत्त्वं पूषन्नपावृणु सत्यधर्म्माय दृष्टये॥ १५॥**

**वलदेव:।**—एवं प्राप्ताधिकारं शिष्यं प्रति परमात्मस्वरूपं निरूप्य तत्साचात्कारी मोचसाधनमित्यतीतग्रन्थेनोक्तम्। स चेश्वरसाचात्कारी न श्रवणादिमात्रेण भवति नापि मोच: साचात्कारमात्रेण किन्तु भगवदनुग्रहादेव। अतोऽनुष्ठितश्रवणमननादिकेनापि साचात्कारार्थं प्राप्तसाचात्कारिणापि च मोचार्थं यथा भगवन्प्रार्थनं कार्य्यं तत्प्रकारप्रदर्शनार्थो हिरण्मयेन पात्रेणेत्यादुत्तरमन्त्रा:। तत्रादित्यरूपोपासनमाह हिरण्मयेन पात्रेणेति। अनुष्टुप्। हिरण्मयमिव हिरण्मयं यत् पात्रं पिबन्ति यत्र स्थिता रश्मयो यत्र स्थितानिति वा पात्रं सूर्य्यमण्डलं तेन तेजोमयेन मण्डलेन सत्यस्य आदित्यमण्डलस्थ अविनाशिन: पुरुषोत्तमस्य श्रीभगवत: मुखं मुखमिति सर्व्वविग्रहोपलचणं लीलाविग्रहस्वरूपम् अपिहितमाच्छादितं वर्त्तते यत् तन्मुखं हे पूषन् पुष्णातीति पूषा तत्सम्बोधनं हे भक्तपोषक परमात्मन् त्वम् अपावृणु अपावृतमनाच्छादितं कुरु। किमर्थम् सत्यधर्म्माय दृष्टये सत्यधर्म्मस्य मदादिभक्तजनस्य दर्शनाय साचात्कारायेति ऋषिप्रार्थनम्॥ १५

**विवृतिः।**—एवमिति। भगवदनुग्रहादेवेति। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामितिश्रुतेः। सत्यधर्म्मायेति। सत्यं सत्यज्ञानानन्दात्मकं त्वद्रूपं धारयति हृदये चिन्तयति इति सत्यधर्म्मा तस्मै। चतुर्थी षष्ठ्यर्थे। दृष्टये इति। दृषिरप्रेक्षणे भावे क्तिप्रत्ययः॥ १५

**शाङ्करः।**—अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इत्युक्तम्। तत्र केन मार्गेणामृतत्वमश्नुत इत्युच्यते। तद्यत् तत् सत्यमसौ स आदित्यः य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष एतदुभयं सत्यं ब्रह्मोपासीनो यथोक्तकर्म्मकृच्च यः सोऽन्तकाले प्राप्ते सत्यात्मानमात्मनः प्राप्तिद्वारं याचते हिरण्मयेन पात्रेण। हिरण्मयमिव हिरण्मयं ज्योतिर्म्मयमित्येतत्। तेन पात्रेणेवापिधानभूतेन सत्यस्यादित्यमण्डलस्थस्य ब्रह्मणोऽपिहितं छादितं मुखं द्वारं तत्त्वं हे पूषन् अपावृणु सत्यधर्म्माय तव सत्यस्योपासनात् सत्यं धर्म्मो यस्य मम सोऽहं सत्यधर्म्मा तस्मै मह्यं अथवा यथाभूतस्य धर्म्मस्यानुष्ठात्रे दृष्टये तव सत्यात्मन उपलब्धये॥ १५॥

**সিদ্ধান্তানুবাদ।**—এইরূপে প্রাপ্তাধিকার শিষ্যের প্রতি, পরমাত্মার স্বরূপ নিরূপণের অনন্তর, তৎসাক্ষাৎকারই মোক্ষসাধন, ইহা পূর্ব্বেই বলিয়াছেন। সম্প্রতি ঐ পরমেশ্বরসাক্ষাৎকারও তৎকৃপাব্যতিরেকে কেবল শ্রবণাদি সাধন দ্বারা এবং মোক্ষ কেবল সামান্যত পরমেশ্বরসাক্ষাৎকার দ্বারা লাভ হয় না; তদ্বিষয়ে পরমেশ্বরের কৃপার অপেক্ষা আছে, ইহাই বলিবার নিমিত্ত শ্রবণাদি-সাধন-সম্পন্ন পুরুষের পরমেশ্বরসাক্ষাৎকারার্থ এবং প্রাপ্তসামান্যপরমেশ্বরসাক্ষাৎকার পুরুষের তৎসেবার্থ বা মোক্ষার্থ ভগবৎকৃপা প্রার্থনের প্রকার প্রদর্শন করিতেছেন;—

হে ভক্তপোষক পরমাত্মন্! তেজোময় মণ্ডল দ্বারা সত্যস্বরূপ পুরুষোত্তমের শ্রীমুখাদি লীলাবিগ্রহ আচ্ছাদিত রহিয়াছে, তুমি সত্যধর্ম্মা ভক্তবর্গের সাক্ষাৎকারার্থ তোমার ঐ শ্রীবিগ্রহের আবরণ উন্মোচন করিয়া দাও। এই মন্ত্রটির অনুষ্টুভ ছন্দ॥ ১৫॥

তাৎপর্য্য।—ভগবন্! তুমি ভক্তপোষক পরমাত্মা। জ্যোতির্ম্ময় ব্রহ্ম তোমার অঙ্গকান্তি। আদিত্যের তেজোময় মণ্ডল দ্বারা যেরূপ আদিত্য-

মণ্ডলান্তর্ব্বর্ত্তী পুরুষের বিগ্রহ আচ্ছাদিত থাকে, ঐ ব্রহ্মরূপ জ্যোতির্ম্মণ্ডল দ্বারা তদ্রূপ তোমার শ্রীবিগ্রহ আচ্ছাদিত রহিয়াছে। আমরা স্বকীয় চেষ্টা দ্বারা কি কর্ম্ম দ্বারা কি জ্ঞান দ্বারা তোমার ঐ আবরণ ভেদ করিতে পারিতেছি না। কর্ম্মজ্ঞানাদির সাহায্যে অবিদ্যাবরণের উন্মোচনে জ্যোতির্ম্ময় ব্রহ্মের সাক্ষাৎকার লাভ হইলেও তদন্তর্ব্বর্ত্তী ত্বদীয় শ্রীমূর্ত্তি দুর্দ্দর্শই রহিয়াছে। তোমার করুণা ব্যতিরেকে আমরা উহা সন্দর্শন করিতে পারিতেছি না। অতএব সত্যস্বরূপ তোমার লীলামাধুর্য্য অনুভব করিবার নিমিত্ত আগ্রহান্বিত ত্বদীয় ভক্ত সকলের প্রতি অনুকম্পা প্রকাশ পূর্ব্বক তোমার জ্যোতির্ম্ময় দৃষ্টিবিভ্রমকারক অঙ্গাবরণ উন্মোচন করিয়া দাও। তাহা হইলেই, ইহারা কৃতার্থতা লাভ করিতে পারে। তোমার কৃপাই ভক্তের একমাত্র শরণ ॥ ১৫ ॥

**पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन् समूह ।**
**तेजो यत् ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ**
**पुरुषः सोऽहमस्मि ॥ १६ ॥**

**बलदेवः ।**—एतदेव स्पष्टीकृत्य ऋषिर्याचते पूषन्निति । उष्णिक् । हे पूषन् हे एकर्षे हे यम हे सूर्य्य हे प्राजापत्य रश्मीन् प्रकाशयन् व्यूह त्वदीयं तेजः समूह च स्वरूपं सङ्कोचयन् मदीयं ज्ञानं विस्तारयेत्यर्थः । यद्वा हे पूषन्नेकर्षे यम सूर्य्य प्राजापत्य रश्मीन् मच्चक्षुष उपघातकान् स्वान् रश्मीन् व्यूह विगमय तेज आत्मीयं ज्योतिः समूह उपसंहर मद्दर्शनयोग्यं कुरु । तथा यत् ते तव रूपं कल्याणतमम् अत्यन्तशोभनं परम-मङ्गलं वा तत् ते तव प्रसादादहं पश्यामि । केन प्रकारेण पश्यसीत्यत आह य इति । योऽसौ पुरुषः मण्डलान्तरस्थः असौ तदितरः प्रतीकस्थितश्च सोऽहमस्मि अस्मच्छब्दवाच्यः भवामि ॥ १६ ॥

**विवृतिः**—एतदेवेति । हे एकर्षे इति । एकाश्चासावृषिश्चैतेत्येकर्षिः । ऋष-ज्ञाने । हे मुख्यज्ञान इत्यर्थः । हे यम इति । यमयति सर्व्वमिति यमः । योऽन्तरं यमयतीति श्रुतेः । हे सूर्य्य इति । सूरिभिर्ज्ञेयत्वात् स सूर्य्यः सूरिशब्दात् तद्धितो यत् । हे प्राजापत्य इति । प्रजानां पतिः प्रजापतिः हिरण्यगर्भस्तस्य वेदोपदेष्टृत्वेन प्रिय यो ब्रह्माणं विदधाति पूर्व्वं तस्मै वेदांश्च प्रहिणोति सर्व्वानिति श्वेताश्वतरश्रुतेः । परममङ्गलमिति । मङ्गलानाञ्च मङ्गलमिति स्मृतेः । पुरुष इति । पुर्षु शेते असौ

पुरुषः। सोऽहमित्यादि। सूर्य्यमण्डलादिप्रतीकस्थो मद्‌हृदयन्तस्थो ज्योतीरूपश्च एक एवेति प्रकारेण तं रूपं पश्यामीत्यर्थः। एतादृशैक्यज्ञानस्यैव मोक्षसाधनत्वादिति भावः॥ १६॥

**शङ्करः।**—हे पूषन् जगतः पोषणात् पूषा रविस्तथैक एव ऋषति गच्छतीत्येकर्षिः हे एकर्षे। तथा सर्व्वस्य संयमनाद्यमः हे यम तथा रश्मीनां प्राणान रसानां स्वीकरणात् सूर्य्यः हे सूर्य्य प्रजापतेरपत्यं प्राजापत्यः हे प्राजापत्य। व्यूह विगमय रश्मीन् स्वान् समूह एकीकुरु उपसंहर ते तेजस्तावकं ज्योतिः। यत्ते तव रूपं कल्याणतममत्यन्तशोभनं तत्ते तवात्मनः प्रसादात् पश्यामि। किञ्चाहं न तु त्वां भृत्यवद्याचे योऽसावादित्यमण्डलस्थो व्याहृत्यवयवपुरुषः पुरुषाकारत्वात् पूर्णम् अनेन प्राणबुद्ध्यात्मना जगत् समस्तमिति पुरुषः सोऽहमस्मि भवामि॥ १६॥

**आनन्दगिरिः।**—व्याहृत्यवयव इति तस्य भूरिति शिरो भुव इति बाहू स्वरिति प्रतिष्ठे पादावित्यर्थः॥ १६॥ १७॥

সিদ্ধান্তানুবাদ।—উহাই পুনর্ব্বার স্পষ্টাক্ষরে বলিতেছেন ;—

হে পূষন্! হে একর্ষে! হে যম! হে সূর্য্য! হে প্রাজাপত্য! মদীয় দৃষ্টির উপঘাতক তোমার তেজোরাশি সঙ্কুচিত করিয়া তোমার স্বরূপকে আমার দর্শনযোগ্য কর। তাহা হইলে, আমি তোমার প্রসাদে তোমার ঐ কল্যাণতম শান্ত রূপ সন্দর্শন করি। সূর্য্যাদি জ্যোতির্ম্মণ্ডলের ও মদীয় হৃদয়ের অভ্যন্তরে এবং হিরণ্যগর্ভাদির অন্তর্হৃদয়ে বা পরব্যোমে একই তুমি বিভিন্নরূপে বিরাজ করিতেছ। আমি তোমাকে ঐ রূপেই দর্শন করিব। এই মন্ত্রটি উষ্ণিক্ ছন্দে রচিত॥ ১৬॥

তাৎপর্য্য।—হে ভগবন্! তুমি ভক্তপোষক, তুমি জ্ঞানময়, তুমি সর্ব্বনিয়ন্তা, তুমি ভক্তগণের ভক্তিবেদ্য, তুমি বেদোপদেশ দ্বারা ব্রহ্মার প্রিয়। ভক্তানুগ্রহ তোমার সুপ্রসিদ্ধ। তুমি জ্যোতির্ম্ময় আদিত্যের বা জ্যোতির্ম্ময় ব্রহ্মের এবং হিরণ্যগর্ভাদির ও নিখিল জীবের অন্তর্য্যামী পুরুষ। তুমি পর-

ব্যোমাদিধামস্থ হইয়াও ভক্তজনহৃদয়স্থ। ভক্ত তোমাকে তাদৃশ রূপেই সন্দর্শন করিয়া থাকে। তুমি আমাদিগের প্রতি করুণা তোমার ঐ শিবতম রূপের দর্শন দাও॥ ১৬॥

वायुरनिलममृतमथेदं भस्मान्तं शरीरम्।
ओं क्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर॥ १७॥

**वलदेवः।**—इदानीं मरिष्यतो मम वायुरध्यात्मपरिच्छेदं हित्वाधिदैवतात्मानमनिलं प्रविशत्विति प्रार्थयते वायुरनिलमिति। गायत्री। हे परमात्मन् मरिष्यतो मम वायुः सप्तदशात्मकलिङ्गशरीररूपः प्राणः अध्यात्मपरिच्छेदं हित्वाधिदैवतरूपं सर्व्वात्मममृतं सूत्रात्मानमनिलं मुख्यप्राणं प्रतिपद्यतामिति वाक्यशेषः। जातकर्म्मसंस्कृतं लिङ्गमुत्क्रमयत्वित्यर्थः। अथानन्तरमिदं स्थूलशरीरमग्नौ हुतं सत् भस्मान्तं भस्मावसानम् ओमिति यथोपासनमोम्प्रतीकात्मकत्वात् सत्यात्मकमग्न्यात्मं ब्रह्माभेदेनोच्यते। ओं हे क्रतो हे सङ्कल्पात्मकं मनः स्मर यन्मम स्मर्त्तव्यं तस्यायं कालः समुपस्थितोऽतः स्मर त्वं ब्रह्मचर्य्ये गार्हस्थ्ये च मया परिचरितः तत् स्मर। तथा कृतं यत् त्वया वाल्यप्रभृति अद्ययावदनुष्ठितं कर्म्म तच्च स्मर। क्रतो स्मर कृतं स्मरेति पुनर्व्वचनमादरार्थम्॥ १७॥

**विवृतिः।** इदानीमिति। वायुरनिलं यजुषी। ओमिति परमात्वरस्य योगिनामालम्बनभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्यास्य स्थूलत्वादिगुणयुक्तस्य ब्रह्मा ऋषिः छन्दो गायत्रं परमात्मा देवता शब्दब्रह्मारम्भाविरामे च यागहोमादिषु शान्तिपौष्टिककर्म्मसु चान्येषु विनियोगोऽस्य। क्रतो इति एभिर्यज्ञान् योगी स्मारयतीत्यनुक्रमणी। वायुरिति। वायुग्रहणं सप्तदशलिङ्गोपलक्षणार्थम्। अतएवाह सप्तदशात्मकेत्यादि। सूत्रात्मानमित्यादि। वायुर्वै गौतम तत्सूत्रं वायुना हि गौतम तत्सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि संदृब्धानि भवन्तीति श्रुतेः। भस्मान्तमिति। भस्मैवान्तो यस्य तद्भस्मान्तं भस्मावसानं भूयात् कृतप्रयोजनत्वादितिशेषः। यद्वा प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनात् देहनाशे च तदन्तर्गतस्य ब्रह्मणो जीवनमरणाद्यवश्यम्भावादित्याशङ्कायामिदमुच्यते। अत्रायमर्थः। यद्यपीदं शरीरं भस्मान्तं दृश्यते तथापि तदन्तर्वर्त्तिनः परमेश्वरस्य न मरणादिदोषप्रसङ्गः। कुतः व्यत्ययात्। अनिलम् अनिलः वायुर्यदा अमृतममृतः अथ तदा ब्रह्म अमृतमिति किं वक्तव्यं तदमृतत्वस्य कैमुत्यसिद्धत्वादिति। ननु संसारिणो वायोः कथममृतत्वं सम्भवति यदुपचारेण तर्ह्यीश्वरस्यापि

तथाविधमस्तत्वं स्यादित्याशङ्क्य वायोर्देहनाशेऽपि तत्कार्य्यविज्ञानतिरोभावाभावो-ऽस्त्येव। वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सदृ-ब्धानि भवन्ति म्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायुरिति बृह-दारण्यकश्रुतेः। अथ प्रणवप्रतीकं प्रार्थयते ओमिति। ओम् ओतत्वादिगुणयुक्त हे क्रतो ज्ञानस्वरूप मां स्मर मया कृतं ध्यानादिकञ्च स्मर अभ्यासस्तात्पर्य्यार्थः अभ्यासेनार्थविशेषं मन्यते इति यास्कोक्तेः अवतीत्योम् अव रक्षणे इत्यस्मात् धातोः ॥१७॥

**शङ्करः।**—अथेदानीं मम मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेदं हित्वा-धिदैवतात्मानं सर्व्वात्मकमनिलममृतं सूत्रात्मानं प्रतिपद्यतामिति वाक्यशेषः। लिङ्गं-चेदं ज्ञानकर्म्मसंस्कृतम् उत्क्रामत्विति द्रष्टव्यम्। मार्गयाचनसामर्थ्यादथेदं शरीर-मग्नौ हुतं भूयात्। ओमिति यथोपासनं ओंप्रतीकात्मकत्वात् सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते। हे क्रतो सङ्कल्पात्मक स्मर यन्मम स्मर्त्तव्यं तस्य कालोऽयं प्रत्युप-स्थितोऽतः स्मर एतावन्तं कालं भावितं कृतमग्ने स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म्म तच्च स्मर। क्रतो स्मर कृतं स्मरेति पुनर्वचनमादरार्थम् ॥ १७ ॥

সিদ্ধান্তানুবাদ।—প্রাণ মরণান্তে অমৃতত্ব লাভ করুক, ইহাই প্রার্থনা করিতেছেন ;—

**মরণের পর আমার প্রাণ অর্থাৎ সপ্তদশাত্মক-লিঙ্গ-শরীরা-বচ্ছিন্ন আত্মা—মুখ্যপ্রাণ পরমাত্মাতে সঙ্গত হউক। প্রাকৃত দেহ প্রকৃতিতেই লীন হউক। সঙ্কল্পাত্মক মানস! আর বৃথা কালক্ষেপ করিও না, কর্ত্তব্য কার্য্য স্মরণ কর, কৃত কর্ম্ম স্মরণ কর। এই মন্ত্রটির গায়ত্রী ছন্দ ॥ ১৭ ॥**

তাৎপর্য্য।—দেহ চিরস্থায়ী নহে। প্রাণাপগমে উহার নাশ অবশ্যম্ভাবী। জীবনান্তে পঞ্চভৌতিক দেহ ভস্মাদিরূপেই হউক বা যে কোনরূপেই হউক পঞ্চভূতেই লয় পাইবে। স্থূল দেহের ন্যায় সূক্ষ্মদেহেরও নাশ আছে। তবে উহা বাসনার বিনাশ পর্য্যন্ত বিনষ্ট হয় না, মৃত্যুর পর লোকান্তরগামী আত্মার সহিত লোকান্তরেই গমন করিয়া থাকে। পরে বাসনার বিনাশে উহারও বিনাশ হইয়া থাকে। এই নিমিত্তই ভক্ত সঙ্কল্পাত্মক মনকে বলিতেছেন, হে মন, আমি এতাবৎকাল তোমার ইচ্ছানুবর্ত্তন করিলাম।

তুমি যখন যাহা কামনা করিলে, আমি তাহারই অনুবর্ত্তন করিলাম। এক্ষণে আমার অন্তিম কাল উপস্থিত। তুমি এ সময়ে প্রকৃত বন্ধুর ন্যায় কৃতজ্ঞের ন্যায় কার্য্য কর। তুমি কৃতঘ্ন হইও না। আমি বাল্যাবধি তোমার যে সকল সেবা করিয়াছি, উপকার করিয়াছি, সেই সকল স্মরণ করিয়া প্রত্যুপকারার্থ সযত্ন হও। কার্য্যকালে বৃথা কালহরণ করিও না। আমার প্রত্যুপকারও আর কিছুই নহে, আমি এই অন্তকালের জন্য তোমাকে যে ধ্যানাদি—যে নামাদি অভ্যাস করাইয়াছিলাম, তুমি এক্ষণে তাহাই স্মরণ কর, তাহা হইলেই আমার যথেষ্ট হইবে ॥ ১৭

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम-उक्तिं विधेम ॥ १८ ॥**

इति वाजसनेयसंहितोपनिषत्सम्पूर्णा।

---

**बलदेवः।**—साक्षात्कारप्रार्थनानन्तरमग्निप्रतीकं भगवन्तं मोक्षं प्रार्थयते अग्ने नयेति। आग्नेयी त्रिष्टुप्। हे देव क्रीड़ादिगुणविशिष्ट हे अग्ने अग्निप्रतीक भगवन् अस्मान् सुपथा शोभनेन मार्गेण देवयानलक्षणेन नय गमय। किमर्थम्—राये धनाय मुक्तिलक्षणाय। कीदृशस्त्वम्—विश्वानि सर्व्वाणि वयुनानि कर्म्माणि प्रज्ञानानि वा विद्वान् जानन्। किञ्च जुहुराणं कुटिलं प्रतिबन्धकं बन्धनात्मकम् एनः पापम् अस्मत् अस्मत्तः सकाशात् युयोधि पृथक् कुरु वियोजय नाशयेत्यर्थः। ततो विशुद्धाय ते तुभ्यं भूयिष्ठां बहुतरां नम-उक्तिं नमस्कारवचनं विधेम कुर्य्याम। ईदृशाभीष्टसाधकस्य तव प्रतिकरणं नमस्कारपरम्परैव न त्वन्यत् प्रत्युपकरणमस्तीतिभावः ॥ १८ ॥

इति श्रीबलदेवविद्याभूषणविरचितं वाजसनेयसंहितोपनिषद्भाष्यं समाप्तम्।

---

**विवृतिः।**—साक्षात्कारेति। अग्ने नयेति। अगस्त्यदृष्टाग्नेयदैवत्या यज्ञान् योगी स्मारयतीति कात्यायनस्मरणात्। सुपथेति विशेषणं दक्षिणायनमार्गनिवृत्त्यर्थम्। यतो गतागतलक्षणेन दक्षिणायनमार्गेण निर्व्विण्णा वयम् अतोऽग्ने त्वां याचामहे पुनर्गमनागमनवर्ज्जितेन शोभनमार्गेणास्मान् कर्म्मफलविशिष्टान् नय सुपथेत्यर्थः। जुहुराणमिति। हृ कौटिल्ये इति धातोः शानच्। युयोधीति। युञमिश्रणामिश्र-णयोरदादित्वात् शब्लोपह्निर्ल्वे छान्दसं हेर्धित्वम्। यदा हे देव अग्ने अस्मान् सुपथा

पुनरावृत्तिवर्जितेनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय मुक्तिदो भव। कुतः हे देव आसंसारम् अस्मदनुष्ठितानि विश्वानि पूर्णाणि मोक्षाय पूर्व्वाप्तानि वयुनानि सत्कर्म्माणि वयुनमिति कर्म्मनामेति निघण्टूक्तेः। यद्वा वयुनानि श्रवणमननिदिध्यासनरूपाणि ज्ञानानि भवान् वेद त्वद्वृत्तया वयुनयेति श्रीभागवते वयुनशब्दस्य ज्ञानार्थकत्वात्। ननु प्रारब्धकर्म्मभिर्वद्धस्य तव कथं मोक्ष इत्यत आह अस्मान् जुहुराणमल्पान् कुर्व्वत् संशये परिवर्त्तयदित्यर्थः। ह्वर चलन इति धातुः। छान्दसत्वेन ह्वादिः। ईदृशम् एनः पापम् अनिष्टं कर्म्मेत्यर्थः तदस्मत्तः युयोधि वियोजय वयञ्च ते तुभ्यं भूयिष्ठां नमउक्तिं विधेम। न च प्रकारान्तरेण प्रतिकर्त्तुं शक्नुम इत्यर्थः॥ १८॥

इति श्रीश्यामलालगोस्वामिसिद्धान्तवाचस्पतिकृता वाजसनेय-
संहितोपनिषद्रहस्यविवृतिः सम्पूर्णा।

---

**शङ्करः।**—पुनरन्येन मन्त्रेण मार्गं याचते। हे अग्ने नय गमय सुपथा शोभनेन मार्गेण। सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम्। निर्व्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेनातो याचे त्वां पुनर्गमनागमनवर्जितेन शोभनेन पथा नय। राये धनाय कर्म्मफलभोगायेत्यर्थः। अस्मान् यथोक्तधर्म्मफलविशिष्टान् विश्वानि सर्व्वाणि हे देव वयुनानि कर्म्माणि प्रज्ञानानि वा विद्वान् जानन् किञ्च युयोधि वियोजय विनाशय अस्मदस्मत्तो जुहुराणं कुटिलं वञ्चनात्मकमेनः पापम्। ततो वयं विशुद्धाः सन्त इष्टं प्राप्स्याम इत्यभिप्रायः। किन्तु वयमिदानीं ते न शक्नुम परिचर्य्यां कर्त्तुं भूयिष्ठां बहुतरां ते तुभ्यं नम-उक्तिं नमस्कारवचनं विधेम तव नमस्कारेण परिचरेम इत्यर्थः। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते। विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुत इति श्रुत्वा केचित् संशयं कुर्व्वन्ति अतस्तन्निर्द्धारणार्थं सङ्क्षेपतो विचारणां करिष्यामः। तत्र तावत् किं निमित्तः संशय इत्युच्यते। विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यतेऽमृतत्वञ्च। ननूक्ताया: परमात्मविद्यायाः कर्म्मणश्च विरोधात् समुच्चयानुपपत्तिः सत्यम्। विरोधोऽस्तु नावगम्यते विरोधाविरोधयोः शास्त्रप्रमाणकत्वात्। यथा विद्यानुष्ठानं। विद्योपासनञ्च शास्त्रप्रमाणकं तथा तद्विरोधावपि। यथा च न हिंस्यात् सर्व्वा भूतानि इति शास्त्रावगत पुनः शास्त्रेणैव बाधतेऽध्वरेऽपि हिंसा स्यादिति अतएव विद्याविद्ययोरपि स्यात्। विद्याकर्म्मणोश्च समुच्चये न दूरमेते विपरीते विषूची अविद्या या च विद्येति श्रुतेः। विद्याञ्चाविद्याञ्चेति वचनादविरोध इति चेन्न। हेतुस्वरूपफलविरोधात्। विद्याविद्याविरोधाविरोधयोर्विकल्पासम्भवा-

दविरोध एवेति चेन्न। सहसम्भवानुपपत्तेः। क्रमेण स्यातां विद्याविद्ये इति चेन्न। विद्योत्पत्तौ तदाश्रयेऽविद्यानुपपत्तेः। न ह्यग्निरुष्णः प्रकाशश्चेति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्नं तस्मिन्नेवाश्रये शीतोऽग्निरप्रकाशो वेत्यविद्याया उत्पत्तिर्नापि संशयोऽज्ञानं वा। यस्मिन् सर्व्वाणि भूतानि आत्मैवाभूद्विजानतस्तत्र को मोहः कः शोक एकत्वमनुपश्यत इति शोकमोहाद्यसम्भवश्रुतेः। अविद्यासम्भवात्तदुपादानस्य कर्म्मणोऽप्यनुपपत्तिमवोचाम। अमृतमश्नुत इत्यापेक्षिकममृतं विद्याशब्देन परमात्मविद्याग्रहणे हिरण्मयेत्यादिना द्वारमार्गयाचनमनुपपन्नं स्यात्तस्माद्यथास्माभिर्व्याख्यात एव मन्त्राणामर्थ इत्युपरम्यते॥ १८॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य
श्रीशङ्करभगवतः कृतौ वाजसनेयसंहितोपनिषद्भाष्यं सम्पूर्णम्॥

---

**आनन्दगिरिः।**—मन्त्रान् पदशो व्याख्याय सङ्क्षेपतो विचारमारभते। अविद्यया मृत्युं तीर्त्वेत्यादिना। अमृतत्वस्येति। अमृतत्वस्य मुख्यमेव कस्मान्न गृह्यते इति सम्बन्धः। शास्त्रीययोर्ज्ञानकर्म्मणोर्विरोधाविरोधौ शास्त्रीयावेव ग्राह्यौ न तर्कमात्रेणेति परेणोक्तम्। सिद्धान्तः शास्त्रसिद्ध एव विरोध इत्याह। दूरमेत इति। विषूची नानागती विद्याविद्ये दूरं विपरीतेऽतिशयेन विरुद्धे इत्यर्थः। सहसम्भवानुपपत्तेरिति कानुपपत्तिः। काठके विरोधश्रवणात्। तद्गतविद्याविद्ययोर्विरोधोऽस्ति। हेत्वविरोधश्रवणादविरोधो भविष्यतीति न वाच्यं विरोधाविरोधयोः सिद्धत्वेन विकल्पसम्भवादुदितानुदितहोमयोर्हि पुरुषतन्त्रत्वाद्युक्तो विकल्प इत्युक्तम्। तर्हि विरोध एवास्तु समुच्चयविधिबलादिति चेन्न। मुख्यब्रह्मविद्याविद्ययोः शुक्तिविद्याविद्ययोरिव सहसम्भवानुपपत्तेः समुच्चयविधेरसिद्धेः। सिद्धे समुच्चयविधौ तद्बलादविरोधसिद्धिरविरोधावगमाच्च समुच्चयसिद्धिरित्यन्योन्याश्रयः स्यादित्यर्थः। सहसम्भवानुपपत्तावपि क्रमेणैकाश्रयविद्याविद्ये स्यातामिति चेत् यदि पूर्व्वमविद्या पश्चात्तु विद्येति क्रमस्तर्हीष्यत एव यदि पश्चात्तर्ह्यसम्भव इत्याह। न विद्योत्पत्ताविति। पूर्व्वसिद्धाया अविद्यायाः प्रध्वस्तत्वादन्यस्याश्चोत्पत्तौ कारणासम्भवात् मूलाभावेन भ्रमसंशयाग्रहणानामपि विदुषोऽनुपपत्तिरित्यर्थः। विद्योत्पत्तौ माभूदविद्या कामकर्म्म तु भविष्यति विदुषोऽपि व्याख्यानभिक्षाटनादिदर्शनादित्याशङ्क्याह। अविद्यासम्भवादिति। चोदनाप्रयुक्तानुष्ठानं हि कर्म्म ज्ञानेन सह तव समुच्चिचीषितं ब्रह्मात्मैकत्वं साक्षादनुभवतो न चोदना सम्भवति कामाभावात्। कामिनो हि सर्व्वाश्चोदनाः। अकामतः क्रियाः काश्चिद्दृश्यन्ते न हि कस्यचित्। यद्यद्धि कुरुते

जन्तुस्तत्तत् कामस्य चेष्टितमिति स्मरणात्। विद्वच्छरीरस्थितिस्तु विद्यालेशाश्रया। कर्म्मशेषनिमित्तं तु विदुषो भिक्षाटनादि न कर्म्म चोदनाभावात् किन्तु यावत्प्राणशरीर-संयोगभावितकर्म्माभासं तच्च विद्वान्न स्वगतं मन्यते कर्म्माध्यासोपादानाविद्याया असम्भवान्नैव किञ्चित् करोमीति प्रत्ययाच्चेति भावः। यदुक्तममृतशब्देन मुख्यमेवामृतत्वं किं न गृह्यते। विद्याशब्देन च परमात्मविद्येति तत्राह। अमृतमिति। मुख्यामृतत्व-ग्रहणे हिरण्मयादिमन्त्रेण द्वारमार्गयाचनमनुपपन्नं स्यात्तस्य न प्राणा उत्क्रामन्त्यत्र ब्रह्म समश्नुते इत्यादिश्रुतेः। ततो मुख्यार्थबाधाद्गौणार्थग्रहणं युक्तमित्यर्थः। यस्मादर्थान्तरं न सङ्गच्छते तस्मादित्युपसंहारः॥ १८॥

ईशाप्रभृतिभाष्यस्य शाङ्करस्य परात्मनः।
मन्दोपकृतिसिद्ध्यर्थं प्रणीतं टिप्पणं स्फुटम्॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्दज्ञान-कृता वाजसनेयसंहितोपनिषद्भाष्यटीका समाप्ता॥

---

সিদ্ধান্তানুবাদ।—পরিশেষে ভগবানের নিকট প্রার্থনা করিতেছেন;—

হে অগ্নে! তুমি আমাদিগকে মুক্তির নিমিত্ত সুপথে লইয়া চল। প্রভো, তুমি ধর্ম্মাধর্ম্ম সকলই জান। আমাদিগের মালিন্য দূর কর। আমরা বিশুদ্ধির জন্য তোমার চরণে নমস্কার করিতেছি। এই মন্ত্রটির ত্রিষ্টুপ ছন্দ॥১৮॥

তাৎপর্য্য।—ভগবন্! আমরা অজ্ঞ, ধর্ম্মাধর্ম্মাদি-জ্ঞান-বিবর্জ্জিত। কি কর্ত্তব্য, কি অকর্ত্তব্য, আমরা তাহার কিছুই জানি না। তুমি সকলই বিদিত আছ। তোমার অবিদিত কিছুই নাই। তুমি পরম পবিত্র। তোমার নিকট গমন করিতে হইলে পবিত্রতার প্রয়োজন। কিন্তু আমাদিগের এমন কোন সামর্থ্য নাই, যদ্দারা শুদ্ধিলাভ করিতে পারি। তোমার করুণাই আমাদিগের একমাত্র বল। কৃপা করিয়া আমাদিগকে

পবিত্র কর। সুপথ প্রদর্শন কর। তোমার চরণে আশ্রয় প্রদান কর। তুমি আমাদিগকে পবিত্র করিবে বা মুক্তি প্রদান করিবে অথবা তোমার চরণে স্থান দিবে, তজ্জন্য আমরা তোমাকে কি দিব? আমাদিগের ত এমন কিছুই নাই, যাহা আমরা তোমাকে দিতে পারি। তবে তোমার চরণে নমস্কার করিতে পারি না, এমন নহে। অতএব তোমাকে ভূয়োভূয়ঃ প্রণাম করিতেছি ॥ ১৮ ॥

সমাপ্ত।

---